महापापं तापं गतमपि सकम्पं गतकृपं ।
सशापं लोको मां हसतु तमु तापं न गणये ॥
बिभेम्यंहोपाये तव बिरुदभङ्गाद्भगनुते ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २९ ॥

टीका—अंहसां पापानामपायो नाशो यस्यास्तत्सम्बुद्धौ । हे अंहोपाये, श्रीकृष्णे ! महान्ति पापानि यस्य तं । त्रिविधं तापं गतं प्राप्तं अत एव सकम्पमपि शरणाभावात्सञ्जातवेपथुमपि । गता लोककृपा यस्मात्तं अदयनीयं । मां प्रति लोकः जनः शापेन सहितं यथा स्यात्तथा सशापं हसतु । अथाप्यहं तमेव तादृशमेव जनहास्यरूपमेव तापं सन्तापं न गणये न गणयामि । किन्तु हे भगनुते, सूर्यसंस्तुते, श्रीकृष्णे ! त्रिभुवनप्रथितकीर्तेस्तवानन्तरवक्ष्यमाणश्लोकोक्तानां त्रितापघ्नीत्यादिविशेषणविशिष्टानां बिरुदानां महत्त्वानां भङ्गान्नाशाद्बिभेमि । परकृतसशापहास्योत्पन्नसन्तापादपि त्वद्बिरुदावलिभङ्गादेव मे महद्भयं नान्यदित्यर्थः ॥ २९ ॥

अतः प्रार्थये—

त्रितापघ्नीतिघ्नी भुवि पतितपावन्यघहरा ।
त्रिपापघ्नी भीघ्नी विविधवरदात्री ऋणहरा ॥
वरा सिन्धुष्वेतद्बिरुदनिचयो जीवतु चिरं ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३० ॥

टीका—त्रितापघ्नी आधिदैविकाधिभौतिकाध्यात्मिकतापहरा । ईतिघ्नी अतिवृष्ट्यादिहरा । ताश्च ‘ अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ॥ स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ’ इति । विविधवरदात्री स्वभक्तेभ्योऽनेकवरप्रदा । ऋणहरा देवपित्रर्षिऋणहर्त्री । त्रिपापघ्नी कायिकवाचिकमानसिकपापहर्त्री । भीघ्नी दृष्टादृष्टभयहन्त्री । भुवि भूलोके पतितपावनी महापापवशात्पतितानामपि पावनी विशोधिनी । अघहरा

व्यसनहर्त्री । 'अंहो दुःखव्यसनेष्वघम्' इत्यमरः । सिन्धुषु गङ्गादिसरित्सु मध्ये । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । एवमेतेषां बिरुदानां निचयः समुदायश्चिरं जीवतु न चाल्पायुर्भवतु । मत्प्रत्याख्यानेनायमल्पायुर्भवेदतो मामुद्धर ततोऽयं ते बिरुदनिचयश्चिरजीवी भविष्यतीति भावः ॥ ३० ॥

मदग्रे त्वं पापी कियानिति चेत्तत्राह–

यदाऽस्याविर्भूता त्वमिह तत आरभ्य पतिता ।
विशोध्याप्युन्नीता अधिकतम एभ्योऽस्म्यत इमम् ॥
यदोद्धर्तुं शक्ता त्वमसि तत उत्तिष्ठ सरिते ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३१ ॥

टीका––हे सरिते ! इह लोके त्वं जलरूपेण यदा यस्मिन्काले आविर्भूताऽसि प्रादुर्भूताऽसि । तत आरभ्य पतिता अपि विशोध्य सर्वपातकेभ्यो विशेषतः शोधयित्वा पावयित्वेति यावत् । उन्नीताः ऊर्ध्वं 'पादोऽस्य विश्वा भूतानि' इति श्रुत्युक्तपादसंज्ञितमायामयप्रपंचादुपरिष्टात् 'त्रिपादस्यामृतं दिवि' इति त्रिपाच्छब्दाभिहितं द्योतनात्मकं अमृतं जरामरणाशना( या )पिपासाशोकमोहादिदोषरहितत्वादनामयं वासुदेवाख्यं ब्रह्म नीताः अभेदेन प्रापिताः । एभ्यः पूर्वमुद्धृतेभ्यः पतितेभ्यः अतिशयेनाधिक इत्यधिकतमः अहमस्मि । अतः हेतोः यदा यर्हि इमं ईदृशं मां उद्धर्तुं विशोध्योर्ध्वमुत्कृष्टं ब्रह्म नेतुं त्वं शक्ताऽसि समर्थाऽसि चेत्ततस्तर्हि हे सरिते ! मामुद्धर्तुं उत्तिष्ठ । यद्यपि ब्रह्मणो निरंशत्वात् तत्र पादकल्पना नोपपद्यतेऽथापि श्रुत्या श्रोतुः सुखबोधार्थं 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इत्युक्तं । तथा च स्मृतिः । 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्'इति । तथा चाभियुक्तोक्तिः- 'निरंशेऽप्यंशमारोप्य कृत्स्नेंशे वेति पृच्छतः । तद्भाषयोत्तरं ब्रूते श्रुतिः

श्रोतृहितैषिणी' इति । 'विकारावर्ति च तथाहि स्थितिमाह' इति न्यायाधिकरणात् । 'परप्रसिद्ध्या परो बोधनीय' इति न्यायात्सर्वं निरवद्यं ॥ ३१ ॥

मदुद्धरणकाले सावधानतयोत्तिष्ठेत्याह—

अयं सामान्योऽस्तीत्यपि मनसि मा स्थापय यतः ।
समस्ताघौघास्ते जननि मयि तिष्ठन्ति सुचिरम् ॥
अतो बद्ध्वोत्तिष्ठेश्वरि परिकरं त्वं दृढतरम् ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३२ ॥

टीका—अयं अग्रतः पतितः पापी सामान्यः साधारणोऽस्तीति मनस्यपि त्वं मा स्थापय। हे जननि, मातः, श्रीकृष्णे ! ये समस्तानां अघानां कायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टज्ञाताज्ञातभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णपापानां ओघाः सङ्घास्ते मयि सुतरां चिरं स्थायिकवद्दीर्घकालं तिष्ठन्ति । अतः हेतोः हे ईश्वरि, सर्वलोकनियंत्रि, श्रीकृष्णे! त्वं परिकरं नीवीं दृढं बद्ध्वा नीवीमित्युपलक्षणं भूषणादीनामपि । सावधानतया मामुद्धर्तुं उत्तिष्ठ उत्थिता भव प्रमादं मा कार्षीरिति भावः ॥ ३२ ॥

एवमुद्धरणे को लाभ इत्यत आह—

ममोद्धारेणाद्य त्रिजगति सुकीर्तिर्भवतु तेऽ—
सितेतीते काले न खलु विमले त्वीदृगभवत् ॥
प्रसङ्गोऽसङ्गोऽहं तत उपरि यास्येऽभयपदं ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते॥ ३३ ॥

टीका—हे असिते, श्रीकृष्णे ! ईदृङ्महापापस्य ममोद्धारेण अद्य शोभन-

दिवसे त्रिजगति त्रैलोक्ये ते तव सुकीर्तिः शोभनं यशो भवतु । हे विमले, मलनिवर्तके ! खलु निश्चयेन अतीते काले भूतकाले तु ईदृग्व्यामोद्धरणसदृशः प्रसङ्गो नाभवत् । अतो ममोद्धारेण ते महाकीर्तिलाभो भविष्यति । ममापि महालाभो भविष्यतीत्याह । हे श्रीकृष्णे ! तत उद्धरणात् अहं असङ्गो निःसङ्गः पुरुष इति यावत् । 'असङ्गो ह्ययं पुरुष' इति श्रुतेः । स्वेन रूपेणाभिनिष्पन्नः सन् उपरि प्रपञ्चाद्बहिर्भूतं । बिभेत्यस्मादिति भयं द्वितीयाभिनिवेशहेतुभूतं अन्तरं भेददर्शनमिति यावत् । 'भयं द्वितीयाभिनिवेशतः स्यात्' इति भागवतोक्तेः । न विद्यते भयं भेददृष्टिर्यस्मिन्तदभयं । पद्यते गम्यते ज्ञातिभिरिति पदं । परं ज्योतिर्ब्रह्मेति यावत् । अभयं च तत्पदं चाभयपदं तद्यास्ये अभेदेन तस्मिन्पदे स्थास्ये इति भावः । यो हि गन्ता स प्रतीपमगतं पदं गच्छति गत्वा च निवर्तते तद्वदत्र गमनं न । ब्रह्मप्राप्तौ सर्वगतीनां प्रत्यस्तमितत्वात् । अतः श्रुत्योक्तम् 'अनध्वगा अध्वसु पारयिष्णव' इति । अभयमित्यत्र श्रुतिः । 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति' इति । असङ्ग इत्यत्र स्वेन रूपेणाभिनिष्पन्न इति साधूक्तं 'सम्पद्याविर्भावःस्वेनशब्दात्' इत्यधिकरणन्यायात् । 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति श्रुतेः । 'अस्माच्छरीरात्समुत्थाय' इत्यत्र शरीरे विद्यमानेऽपि शरीराभिमानविनिर्मुक्तः शुद्धजीव उच्यते । 'मुक्तः प्रतिज्ञानात्' इति न्यायात् । प्रतिज्ञानं तूत्तरवाक्ये स्वेन रूपेणाभिनिष्पद्यते इति नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्दादिस्वरूपाभिव्यक्तिकथनमिति । अत्र श्रुतिस्थज्योतिःशब्देनोपासकानामिव सूर्यलोकद्वारा ब्रह्मलोकप्राप्तिरिति नोच्यते 'आत्मा प्रकरणात्' इति न्यायात् । 'आत्माऽपहतपाप्मा तमावां विविदिषावहै' इतीन्द्रविरोचनोक्त्या ज्योतिःशब्दे-

नात्र परमात्मा ग्राह्यः । कुतः । प्रकरणात् । अलमतिविस्तरेण ॥ ३३ ॥

यत एवमतः–

अतः प्रादुर्भूत्वा परमनिजरूपेण सहसा ।
ममाघाद्रीन् भित्वा सकलमलहंत्रीह सहसा ॥
कृपाक्षीरं धृत्वाङ्क उशति च मे देहि सहसा ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३४ ॥

टीका–अतः हे सकलमलहंत्रि, सर्वपापहंत्रि, श्रीकृष्णे ! इह मदग्रतः सहसाऽकस्मात् परमं यन्निजरूपं ध्यानमङ्गलं 'चतुर्बाहुः' इत्यादिना पूर्वं मयोक्तं तेन परमस्वरूपेण प्रादुर्भूत्वाऽऽविर्भूय सहसा बलेन ममाघाद्रीन्पापपर्वतान् भित्वा विदार्य विनाश्येति यावत् । हे उशति कमनीये, श्रीकृष्णे ! अंके मां धृत्वा हसेन हास्येन सहिता सहसा प्रेम्णा स्मितमुखी सती मे मह्यं कृपैव क्षीरं दयादुग्धं देहि समर्पय । अत्र श्लोके 'अङ्कमुपरि' इति पाठो विद्यते स न समीचीनः 'उपर्यध्यधसः सामीप्य' इति सूत्रेण द्विर्भावे द्वितीयाऽन्यथा षष्ठी । अङ्कस्योपरि धृत्वेति सिद्ध्यति तथा पद्ये नियोजनासम्भवात् अङ्क उशतीति पाठः साधीयान् ॥ ३४ ॥

कुतस्त्वय्येतावद्दुरितमिति शङ्काऽस्तु न यतोऽ-
न्यथाऽऽत्मानं सन्तं तत इतरथा वेद्मि हि मया ॥
निजात्मस्तेनेन प्रतिपदमघं किं न विहितं ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३५ ॥

टीका––रे प्रार्थक ! त्वयि एतावत्समस्ताघौघास्ते जननि मयि तिष्ठन्तीत्युक्त्वादियद्दुरितं पापं कुत आगतमिति ते शङ्का नास्तु माऽस्तु । अतः यस्मात् नित्यशुद्धबुद्धमुक्तसत्यस्वभावं परिपूर्णमकर्तारमभोक्तारमन्यथासन्तमात्मानं । ततः स्वरूपादितरथा इतरप्रकारेण अनित्यादिरूपं

परिच्छिन्नं कर्तारं भोक्तारं वेद्मि। हि यस्मादेवं वेद्मि तस्मात् निजात्मस्तेनेन स्वरूपभूतात्मचौरेण मया प्रतिपदं अनुपदं अघं पापं किं न विहितं कृतं। अपि तु सर्वमेव पापं मया विहितमिति भावः। तथाहि। 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥ किं तेन न कृतं पापं चोरेणात्मापहारिणा' इति 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभय' इति श्रुत्युक्तलक्षणस्यात्मनोऽन्यथा वेदनमेव चौर्यं 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तेन चात्मेति गीयत' इत्यात्मशब्दनिर्वचनविघातकरं। ततः तेन चौर्येण मयि सर्वपापावेश इति भावः ॥ ३५ ॥

मत्कथनादेव त्वं वेत्सीति न। तथाऽपि सर्वज्ञायास्तेऽग्रे लोकानुसारेण वच्मीत्याह—

समं साक्षात्पश्यस्यखिलहृदयस्थे भगवति।
त्वदग्रे वक्तव्यं न हि न हि तथापीह वदति ॥
प्रभोरग्रे लोकस्तदनुसरणं मेऽस्तु शरणं।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३६ ॥

टीका—हे अखिलहृदयस्थे, सर्वान्तरस्थे, भगवति, श्रीकृष्णे! त्वं समं सर्वं साक्षादव्यवधानेन पश्यसि। सर्वान्तःस्थत्वात्। अतो हे श्रीकृष्णे! त्वदग्रे तव पुरतः न हि न हि वक्तव्यं। तर्हि त्वं कुतो वदसीत्यत आह। तथाऽपि इह लोके प्रभोर्ज्ञाततत्वस्याऽग्रेपि स्वकीयं विवक्षितं लोको जनो वदति। अतस्तदनुसरणं तादृशलोकानुसरणं सर्वज्ञाया अपि तवाग्रे स्वकीयवृत्तकथनरूपं मे मम शरणं आश्रयोऽस्तु भवतु। साक्षात्पश्यसीत्यत्र विकारमन्तरेण स्वाध्यस्तं सर्वं साक्षादव्यवधानेन स्वरूपबोधेनेक्षते पश्यतीति साक्षीति निरुक्तं साक्षिस्वरूपत्वं विवक्षितं ॥ ३६ ॥

ननु जगज्जन्मादिहेतुरात्मा साक्षी नाहमित्यत आह–

स्वभूरूपेण त्वं सृजसि हरिधाम्नाऽवसि हरा–
त्मना हंसीन्द्राद्या विसृजसि विभूतीः स्वकलया ॥
लयान्ते ते कुक्षिं विशति सकलं मंगलगते ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३७ ॥

टीका–स्वभूरूपेण ब्रह्मरूपेण त्वं सृजसि जगत्सृष्टिं करोषि । हरिधाम्ना विष्णुरूपेण त्वं सृष्टं जगदवसि रक्षसि । हरात्मना रुद्ररूपेण त्वं हंसि जगदुपसंहरसि । स्वकलया स्वांशेन कृत्वा त्वं इन्द्राद्या विभूतीः सृजसि विविधसर्गं करोषि । एवं रजस्सत्वतमोगुणैः कृत्वा पुनःपुनर्दैनंदिनसर्गे ब्रह्मविष्णुरुद्ररूपैस्त्वमेवोत्पत्तिस्थितिलयान्करोषि । ततो लयान्ते महाप्रलये सकलं सर्वं जगत् ते कुक्षिं अव्यक्तरूपं वासनामानसात्मना विशति मुक्तौ वा । सकलं कलाभिः सहितं अधिकारि जगत् हे मङ्गलगते ! ते कुक्षिं स्वरूपं नामरूपोपाधिपरित्यागेन विशति ॥ ३७ ॥

इहापि त्वं पापिप्रचयमलसङ्क्षालनपटू–
दकात्माभूराभूरपि सुरगणाः शापमिषतः ॥
स्वतंत्रे सन्मन्त्रे सरित इह भूत्वा तव गता ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३८ ॥

टीका–आसमन्ताद्भवति अस्तीत्याभूः तत्सम्बुद्धौ । हे आत्मरूपिणि ! अत एवापारतंत्र्यात् हे स्वतंत्रे, स्वच्छन्दे ! अत एव सन्प्रशस्तः मंत्रो गुप्तवादो यस्यास्तत्सम्बुद्धौ ईदृशि श्रीकृष्णे ! इहाप्यवतारे त्वं पापिनां प्रचयो यो मलः पापं तस्य सम्यक्क्षालने विषये पटु कुशलं यदुदकं तदेवाऽऽत्मा स्वरूपं यस्यास्तादृक्स्वरूपा त्वं अभूः आसीः । इह भूलोके तदा शापमिषतः यज्ञारम्भसमये मुहूर्तातिक्रमाभियाऽसन्निहितायामपि

ज्येष्ठपत्न्यां सन्निहितां कनिष्ठामपि पत्नीमादाय ब्रह्मणा देवर्ष्याज्ञया यज्ञाभिक्रमे कृते सति पश्चात्स्वापमानबुध्या ब्रह्मणो ज्येष्ठपत्न्या एते सर्वे जडरूपा भवन्त्विति यः शापो दत्तः ततः शापमिषतः सुरगणाः ब्रह्मरुद्र-प्रभृतिदेवगणाः ककुद्मतीवेण्यादिनामिकाः सरितो नद्यो भूत्वाऽपि तव गताः ' कर्मणि षष्ठी ' त्वां गताः । यदि तवास्मिन्नवतारेऽपि त्वद्रूपे ककुद्मतीवेण्याद्यात्मना ब्रह्मरुद्रादयो देवा अपि त्वयि लयं गतास्तर्हि किमु वक्तव्यं लयान्ते ते कुक्षिं विशति सकलमिति । एतत्सर्वं पुराणे द्रष्टव्यं ॥ ३८ ॥

तमोनुत्ते भासा जगति खलु भास्वान्न भवति ।
स्वयंज्योतिः स त्वां तपनमिव भं भासयत इत् ॥
अये भातां त्वाऽनु द्युमणिसहितं भाति सकलं ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३९ ॥

टीका—हे भवति, श्रीकृष्णे ! ते तव भासा प्रभया जगति लोके तमो नुदतीति तमोनुत् चन्द्रोऽग्निरर्कश्च । ' चन्द्राग्न्यर्कास्तमोनुद ' इत्यमरः । भास्वान्खलु हे स्वयञ्ज्योतिः स्वयम्प्रभे, श्रीकृष्णे ! भं नक्षत्रं । जातावेक-वचनं तपतीति तपनः सूर्यस्तमिव त्वां तु स चंद्रोऽग्निरर्को वा न भास-यते प्रकाशातिशयं न करोति । त्वत्त एव लब्धप्रकाशत्वात् । इदेवार्थेऽ-व्ययं । अये श्रीकृष्णे ! भातां त्वामनु पश्चात् द्युमणिः सूर्यस्तेन सहितं यत्किञ्चित्सकलं जगत् भाति । सूर्यचन्द्रादिव्यतिरिक्तमलौकिकं तेजस्त्व-मेवासि । ' अनुकृतेस्तस्य च ' इत्यधिकरणन्यायात् । ' न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्त-मनु भाति सर्वं तस्य भासा सर्वमिदं विभाति'इति श्रुतेः । 'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।

न्द्रचन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति स्मृतेस्त्वमेव जगत्कारणं ॥ ३९ ॥

'सरित इह भूत्वा तव गता' इति यदुक्तं तदेवोपपादयति—

गणी वेणी भूत्वाऽप्यसुरसुरवाराहृतपदो ।
मदोद्धूत्यै यद्दृग्भुवनजयिनोऽलं कुसुमगोः ॥
स गोवाहोपि त्वां परमसखिवत्संगत उतो ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४० ॥

टीका—भुवनं जेतुं शीलं यस्य ताच्छील्ये णिनिः । कुसुमानि पुष्पाण्येव गावः बाणाः यस्य 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौ' इत्यमरः । तस्य कुसुमगोः पुष्पधन्वनः मदनस्य अहं भुवनजयीत्येतल्लक्षणस्य मदस्य चित्तोद्रेकस्योद्धूत्यै उद्धारायोपशमायेत्यर्थः । यस्य दृक् दृष्टिः अलं पर्याप्ता । न तु युद्धादिप्रसङ्गविचारः । ईदृशः स प्रसिद्धः, गौर्वृषभः नन्दिकेश्वरः वाहो वाहनं यस्य स गोवाहः । गणाः प्रमथाः सन्ति यस्य स गणी शिवः । 'सङ्घाते प्रमथे गण' इत्यमरः । सोऽपि असुरसुराणां दैत्यदेवानां वारः समुदायः तेनादृते अर्चिते पदे यस्य सः । 'आदृतौ सादरार्चितौ' इत्यमरः । ईदृशोऽपि स वेणी तन्नामिका नदी भूत्वा परमसखिवत्त्वां सङ्गतः । उतो अपि किमु वक्तव्यं अन्ये सङ्गच्छन्त इति ॥ ४० ॥

स्वयम्भूर्ब्रह्माऽयं भुवनरचनाभिज्ञधिषणः ।
ककुद्मत्याख्याऽसौ सरिदिह हि भूत्वाऽपि सुतवत् ॥
समायातस्त्वां सम्मुखमु करहाटाख्यविषये ।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४१ ॥

टीका—दर्शयतश्चैवं प्रत्यक्षानुमान इति न्यायेन परमात्मन एव पञ्चमहाभूतस्रष्टृत्वं हिरण्यगर्भस्य तु परमात्माऽऽज्ञया चराचरसकलभौतिक-

शरीरस्रष्टृत्वं चोक्तं। अतः भुवनरचने चराचरभौतिकशरीररचनेभिज्ञा निपुणा धिषणा प्रज्ञा यस्य स तथा स्वयं भवतीति स्वयंभूः। 'भुवः संज्ञांतरयोः' इति क्विप्। अयं अग्रजः श्रुतिप्रसिद्धः। 'हिरण्यगर्भः समवर्तताग्रे' इति। 'यो ब्रह्माणं विदधाति पूर्वम्' इति च श्रुतेः। 'स वै शरीरी प्रथम' इति स्मृतेश्च। ईदृग्ब्रह्मा असौ विन्ध्यप्रान्ते प्रसिद्धा ककुद्मत्याख्या सरित् नदी इह लोके भूत्वाऽपि हीति निश्चयेन सुतवत्पुत्रवत्संमुखं यथा स्यात्तथा करहाटाख्ये विषये देशे त्वां समायातः मिलितः। अतोऽयं पितृपुत्रसङ्गमः वेणीकृष्णयोस्तुल्यत्वात्प्रीतिसङ्गमः ४१

अतस्तव महिमाऽत्यद्भुत इति स्तुवन्नाह—

द्विजाः काले काले शुचिषु च चतुर्भिः फलदृश-
श्चतुर्भिर्द्वाभ्यां पंचभिरपि बुधा जुव्हति सति ॥
पुनर्द्वाभ्यां स्नानादपि नयसि नाकं त्वमखिलं।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४२ ॥

टीका—हे सति, श्रीकृष्णे! 'सायं प्रातरग्निहोत्रं जुहोति स्वर्गकाम' इत्यर्थवादश्रुत्युक्तेः स्वर्गाख्ये फले दृग्दृष्टिर्येषां ते फलदृशः कामकामाः बुधा अपि कर्माङ्गभूतदेहादिव्यतिरिक्तज्ञानवन्तो देवतादिज्ञानवन्तश्च न तु तत्त्वज्ञाः फलदृश इत्युक्तत्वाञ्जीवब्रह्माभेदवतां कर्मानुपयोगाच्च। द्विजाः ब्राह्मणक्षत्रियविशः त्रैवर्णिकानामेव यागादौ अधिकारात् काले काले सर्वेष्वपि योग्यकालेषु ज्योतिःशास्त्रोक्तेषु 'कालानुपूर्वा विहिताश्च यज्ञा' इत्युक्तेः। शुचिषु दक्षिणगार्हपत्याहवनीयाग्निषु 'ओ ३ श्रावय' इत्यध्वर्यूक्तैश्चतुर्भिः 'अस्तु श्रौ ३ षट्' इत्याग्नीध्रोक्तैश्चतुर्भिश्च। 'यज' इत्यध्वर्यूक्ताभ्यां द्वाभ्यां च। 'ये ३ यजामहे' इति होत्रुक्तैः पञ्चभिरपि च पुनर्होत्रुक्ताभ्यां 'वौ ३ षट्' इति द्वाभ्यां जुव्हति। 'चतुर्भिश्च चतुर्भिश्च' इति श्रुतेः। तेषामयं प्रतिपदं वैगुण्यापत्तेर्महानायासः। त्वं तु अखिलान्व-

र्गोयविशिष्टानजातपुत्रानकृष्णकेशान्न्यूनातिरिक्ताङ्गानपि मनुष्यान्स्ना- नादपि स्वजलस्नानमात्रेणापि न विद्यतेऽकं दुःखं यस्मिन्तं नाकं स्वर्गं नयसि। अतो यज्ञापेक्षया तव स्नानमाहात्म्यं विशिष्टमिति भावः। स्वर्गे दुःखाद्यभावः श्रूयते। 'स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति। उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके' इति। यज्ञकर्म तु प्रतिपदगहनम् 'उच्चैस्तरामस्य ऋचमुक्त्वा शनैस्तरां वषट् कुर्यात् पापीयांसमेवैनं तत्करोति' इत्यतिप्रत्यवायाकुलाढ्यं देशकालवयोवस्थाधनाद्यपेक्षमनेकसाध्यं च। श्रूयते। 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म' इत्यादिः। ईदृग्विधयज्ञा- पेक्षया स्वतंत्रं कालाद्यपेक्षारहितं तव जलस्नानं नाकादिफलदं सुकरं ॥ ४२ ॥

त्वं साक्षाद्ब्रह्मेत्याह—

प्रभावस्तेऽपीदृग्दहति दहनो वाति पवनो।
मनोल्हादे भीतस्तपति तपनो धावति मृतिः ॥
वृषा वर्षत्यन्ये त इह बलिमुञ्झन्ति नियतं।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४३ ॥

टीका—मनः ल्हादयत्याल्हादयतीति तत्सम्बुद्धौ। हे मनोल्हादे, श्रीकृष्णे! ते तव प्रकृष्टो भावः सत्ता स्वभावो वा प्रभावः सामर्थ्यं वा ईदृग्वर्तते। ईदृक्त्वमाह दहतीति दहनोऽग्निर्दाह्यं दहति। पवत इति पवनो वायुर्वाति। त्वत्तो भीतस्तपनः सूर्यस्तपति। मारयतीति मृति मृत्युर्भीतस्सन् मरणार्हं प्राणिनं मारयितुं धावति गच्छति। वर्षतीति वृषा इन्द्रः भीतः सन्वर्षति। येऽन्ये वस्वादिदेवास्ते सर्वे स्वाधिकारेऽ- धिकृताः सन्तोऽपि ते देवा इह त्वयि तुभ्यमित्यर्थः। बलिं भागधेयं आज्ञापालनरूपं करमिति यावत् नियतं यथा स्यात्तथोञ्झन्ति। अत्र

सर्वत्र भीत इति विशेषणं प्रत्येकं सम्बध्यते। तथा श्रुतत्वात्। श्रुतिश्च 'भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेंद्रश्च। मृत्युर्धावति पञ्चम' इति। तेषां दहनादिकर्मापि त्वद्दत्तसामर्थ्यादेव न स्वत इति। 'तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुम्' इत्यादिश्रुत्याऽवगम्यतेऽतस्त्वं ब्रह्मासीति भावः ॥४३॥

अतस्त्वं पापहरणक्षमेत्याह–

क्व शक्तिस्तेऽनन्ते विविधकुकृताद्रिप्रहरण-
क्षमा सामान्यं मे त्रिविधमपि पापं क्व नु कियत् ॥
तवाग्रे वन्ह्यग्रे विरसबहुशष्पाद्रिवदहो।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४४ ॥

टीका—हे अनन्ते, अपरिच्छिन्नब्रह्मरूपिणि! विविधान्यनेकानि यानि कुकृतानि पापानि तेषामद्रिरिव राशिस्तस्य प्रहरणक्षमा विदारणकुशला ते तव शक्तिः क्व कुत्र। त्रिविधमपि कायिकवाचिकमानसिकरूपं सामान्यं साधारणं मे पापं क्व नु ब्रूहि। वन्ह्यग्रे अग्नेः पुरतः विरसानि शुष्काणि यानि बहुशष्पाणि प्रभूतबालतृणानि तेषां राशिभिस्तुल्यं राशिवत् त्रिविधमपि पापं अहो कृष्णे! तवाग्रे कियत्। अहो इत्याश्चर्ये वा ॥ ४४ ॥

अपि च–

न कृच्छ्राद्याः शक्ता यदघहरणायापि बहुशो।
न च प्रायश्चित्तं हवनजपनाद्यं क्षममभूत् ॥
स कृष्णे त्वत्स्नानाद्व्रजति सुशुचिः सन्दिवमहो।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४५ ॥

टीका—यस्य पापिनोऽघहरणाय कृच्छ्राद्याः प्राजापत्यादिकृच्छ्राः चान्द्रायणादिव्रतानि चापि न शक्ता न समर्था बभूवुः बहुशः अनेकशः

आचीर्णं हवनजपनाद्यं तिलहोमगायत्र्यादिजपतीर्थस्नानादिकं यदघहर-णाय क्षमं शक्तं नाभूत् नासीत्। हे कृष्णे! ईदृशः स पापी इतरसाध-ननिरपेक्षोऽपि केवलं तव स्नानं त्वत्स्नानं तस्मात्त्वदीयजलस्नानमात्रेण सुतरां शुचिः शुद्धः सन् दिवं स्वर्गं व्रजति गच्छति। अहो इत्याश्चर्ये। यस्य क्वापि न शुद्धिः स त्वत्स्नानतः शुचिर्भूत्वा स्वर्गं व्रजत्येतन्महदा-श्चर्यमिति भावः ॥ ४५ ॥

कुसङ्गान्यार्त्यर्थापहरणमुखं कायिकमघं।
हरेज्याऽऽर्योन्निन्दाकदशनमुखं वाचिकमघम् ॥
कुचिन्ताऽन्यानर्थस्मरणमुखरं मानसमघं।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४६ ॥

टीका—हे श्रीकृष्णे! कुत्सितानां दुराचाराणां सङ्गः संसर्गश्चा-न्यार्तिः परपीडा च अर्थानां परद्रव्यादीनामपहरणं चौर्यं च तत्प्रभृति कायिकं कायेन देहेन निष्पादितं अघं मम पातकं हर परिहर। तथा इज्यानां पूज्यानां देवादीनां आर्याणां सज्जनानां उन्निन्दा च कदशन-मुखं कुत्सितान्नभक्षणादिकं च वाचिकं अघं हर। कुत्सितानां विषयाणां चिन्ता चिन्तनं च अन्येषां परेषां अनर्थस्मरणमुखरं अनर्थचिन्तनादिकं मानसं मानसिकं अघं हर ॥ ४६ ॥

एवं पापपरिहारं कुरु वा न वाऽथाप्येवमस्त्विति प्रार्थयति—

त्वदीयात्मस्पृष्टः स्पृशतु गतिदे स्पर्शन उत।
त्वदीयं पानीयं पततु वदनाब्जे मम बत ॥
उताहो त्वत्तीरे तुहिनशिशिरेऽङ्गं पततु मे।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४७ ॥

टीका—हे गतिदे, श्रीकृष्णे! त्वदीयात्मस्पृष्टः त्वदङ्गस्पृष्टः स्पर्शनो

वायुर्मां स्पृशतु। उतापि त्वदीयं पानीयं जलं मम वदनाब्जे पततु। अहो श्रीकृष्णे! उतापि च तुहिनशिशिरे हिमवच्छीतले त्वन्नीरे मे मम अङ्गानि सन्त्यस्येति अङ्गं। 'अर्शआदित्वान्मत्वर्थीयोच्' । शरीरं पततु। तावता कृतकृत्यः स्यामिति भावः ॥ ४७ ॥

नुतां तीर्थैः सर्वैरपि जगति सर्वाभिरमले।
सरिद्भिर्देवेन्द्रैरपि मुनिभिरत्यादृततटाम् ॥
न कस्त्वां सेवेत प्रवरसरिदत्राऽऽधिमथने।
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४८ ॥

टीका--हे आधिमथने, मनस्तापहरे! हे अमले, हे प्रवरसारिन्मुख्यनदि, श्रीकृष्णे! अत्र जगति सर्वैस्तीर्थैः सर्वाभिरपि सरिद्भिरपि नुतां स्तुतां देवेन्द्रैर्मुनिभिरपि अतिशयेनादृतं तटं यस्यास्तां त्वां को न सेवेत। अपि तु सर्वेऽपीति भावः ॥ ४८ ॥

अतस्त्वद्दर्शनं नित्यमस्त्विति पृथ्वीवृत्तेनाह-

धरेन्द्रतनयेऽभयेऽस्म्युपगतोऽनुकम्पोदये।
जयेश्वरि हरीशरूपिणि मणिद्युते त्वाऽर्थये ॥
अये नदि न दीनतां व्रजतु हृन्मदीयं स्वये-
क्षये वपुषि तेऽसिते भवतु दृक्त्वदीयेऽम्मये ॥ ४९ ॥

टीका- अनुकम्पाया उदयो यस्यास्तत्सम्बुद्धौ। हे अभये, धरेन्द्रतनये कृष्णे! त्वामुपगतोऽस्मि। हे हरीशरूपिणि, हरिहरात्मिके, ईश्वरि, श्रीकृष्णे! त्वं जय मदुद्धरणेनोत्कर्षमाविष्कुरु। हे मणिद्युते, इन्द्रनीलनिभे, कृष्णे! त्वा त्वां प्रति अर्थये प्रार्थयामि। अये नदि श्रीकृष्णे इतःपरं मदीयं हृन्मनः दीनतां दैन्यं न व्रजतु। हे असिते, कृष्णे! स्वये शोभनाये, अक्षये नित्ये, अम्मये, जलमये! त्वदीये वपुषि स्वरूपे मम दृक्मद्दृष्टिर्भवत्वस्तु ॥ ४९ ॥

कृष्णाया अविकृतत्वमाह शार्दूलविक्रीडितेन–

काचित्क्षालयति प्रभोः पदयुगं काचित्कमारोहति ।
स्वेदात्कापि जटादितः प्रकटिता बद्धा परोद्वाहिता ॥
उच्चैः काचन मानिनीह पतिता जाता गता काप्यध-
स्त्यक्तं ते न च नाम रूपमपि सत्कृष्णे दशायामिह ५०

टीका–काचिद्यमुना कालिंदीसंज्ञिता पत्नी भूत्वा परिचारिणीव प्रभोः कृष्णस्य पादयुगं क्षालयति । काचित् गङ्गा प्रभोः शिवस्य द्वैतीयिका भूत्वा कं शैवं शिर आरोहति । काऽपि नर्मदा प्रभोः शिवस्य स्वेदाद् घर्मात्प्रकटिता । काऽपि गोदावरी प्रभोः शिवस्य जटादितः प्रकटिता । आदिशब्दात्पादाङ्गुष्ठादितः । अपरा मन्दाकिनी प्रभोर्जटायां बद्धाऽभूत् । अपरा गङ्गा शन्तनुनोद्वाहिता । रेवा भीमसेनेन च । काचन मानिनी गङ्गा सरस्वती च परस्परं कलहं कृत्वोच्चैर्विष्णुलोकादिह भूलोकपतिता जाता पतिताऽभूत् । काऽपि भोगवती अधो नागलोकं गता त्वं तु न तथाविधा । कुतः । हे कृष्णे, इहास्यां दशायामवस्थायां ते त्वया सत्प्रशस्तं विद्यमानं च कृष्णेति नाम मेघश्यामं रूपमपि न त्यक्तम् ॥ ५० ॥

स्रग्धरावृत्तेन हारबन्धेन स्तौति–

देवेड्ये वेदवेद्ये जय जय भयहृत्त्वं कृपाकृष्टकृष्णे
त्राहि त्राहि ग्रहीतृंस्तव भवहवराख्यां सदा सत्यसन्धे ॥
भूयो भूयोऽभयोक्तीर्वितर तव तनुर्येह मोहप्रहर्त्री ।
सा मे कामेश मेध्या मनसि नयनयोरादरादस्तु दत्त ॥ ५१ ॥

टीका–हे देवेड्ये देवस्तुत्ये ! हे वेदवेद्ये ! भयहृत्त्वं जय जय । कृपया कृष्टा व्याप्ता चासौ कृष्णा च तत्सम्बुद्धौ । त्वं तव भवहवराख्यां

संसारहारिश्रेष्ठनाम ग्रहीतॄन् त्राहि । सत्या सन्धा प्रतिज्ञा । 'न मे भक्तः प्रणश्यति ' इत्यादिरूपा यस्यास्तत्सम्बुद्धौ । त्वं नः सदा भूयो भूयोऽभयोक्तीरभयप्रदवचनानि वितर देहि । हे कामेश कामपूरक दत्त या इह कृष्णातीरे संसारमोहप्रहर्त्री मेध्या पवित्रा तव तनुर्मूर्तिर्विद्यते सा आदरादादरपूर्वकं मे मनस्यन्तःकरणे नयनयोर्नेत्रयोर्मध्येऽपि अस्तु । नेत्राभ्यां तादृशमूर्तेरवलोकनेन मनसा ध्यानेन चाहं कृतार्थः स्यामिति भावः ॥ ५१॥

श्रीकृष्णाश्रयान्मुक्तिरित्यनुष्टुभाह गोमूत्रिकाबन्धेन-

कृष्णां यो वृणुते भक्तः पदं यायान्निरन्तरम् ॥
तृष्णां यो वृणुतेऽभक्तः खेदं यायानिरन्तरम् ॥ ५२ ॥

टीका—यः भक्तः कृष्णां वृणुते स्नानादिना भजते सः निरन्तरं भेदरहितं शाश्वतं पदं यायात् । यः तृष्णां वृणुते सोऽभक्तः निरन्तरं खेदं यायात् ॥ ५२ ॥

कृष्णास्थप्रेरितमतिर्वासुदेवसरस्वती ॥
कृष्णामस्तौत्ततः प्रीयान्नरसिंहसरस्वती ॥ १ ॥

इति श्री. प. प. वासुदेवानन्दसरस्वतीविरचिता
कृष्णालहरी समाप्ता

इति स्वकृतकृष्णालहरीटीका कावेरीतीरे समाप्ता ॥

# श्रीकृष्णालहरीविवरण

( लेखक—पं. वामनशास्त्री उपाध्ये, नरसोबावाडी )

१ हरीशात्मा कृष्णाः—( श्लो. ५ ) कल्पाच्या आरंभीं श्रीभगवान् विष्णूंनीं सृष्टि निर्माण करण्याकरितां ब्रह्मदेवास आज्ञा केली असतां, ब्रह्मदेवानीं सृष्टि निर्माण करून भगवान् श्रीविष्णूंची प्रार्थना केली कीं, आकल्पांत, ह्या सृष्टीची स्थिति कशी होईल ( कारण कलियुगामध्यें लोकांच्या हातून पापें घडून अधर्मामुळें सृष्टीचा क्षय होईल ) अशी प्रार्थना श्रवण करून ब्रह्मदेवास श्रीविष्णूंनीं सांगितलें कीं—

मातरं सर्वतीर्थानां नदीनामग्रजां त्वहम् ॥
स्रक्ष्यामि पूर्ववत्कृष्णां मन्मयीं जगतः स्थितेः
तीर्थानां हि प्रभावेण कलिकल्मषशत्रुणा ॥
कृष्णायाश्चापि सान्निध्यात्पापं नैव भविष्यति ॥ ( कृष्णामाहात्म्य )

सर्व तीर्थांची माता व सर्व नद्यांमध्यें श्रेष्ठ अशी मद्रूपिणी कृष्णा जगताच्या स्थितीकरितां मी पूर्वीप्रमाणेंच प्रगट करितों. कलियुगामध्यें घडणाऱ्या पातकांची शत्रुरूपी अशी कृष्णेमध्यें वास्तव्य करणारीं जीं तीर्थे त्यांच्या प्रभावानें व कृष्णेच्या सान्निध्यानें लोकांच्या हातून पाप घडणार नाहीं. अशी ही सर्व पातकांचा नाश करणारी स्वस्वरूपिणी कृष्णा जगताच्या स्थितीकरितां कल्पाच्या आरंभीं भगवान् श्रीविष्णूंनीं पूर्वीप्रमाणेंच प्रगट केली. ही हरिहरस्वरूपिणी आहे. कारण—

शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥ ( स्कंदपुराण )

शंकराचें हृदय ( आत्मा ) विष्णु आहे व विष्णूचें हृदय ( आत्मा ) शंकर आहे; अर्थात् शिव विष्णु हे एकरूपच आहेत. म्हणूनच भगवान् श्रीशंकर स्कंदास सांगतातः—

कृष्णेयं कृष्णरूपस्य तनुर्मम जलात्मिका ॥
मत्तः कृष्णा समुत्पन्ना तत्प्रभावं परं विदुः ॥ (कृष्णामाहात्म्य)

कृष्णा ही कृष्णरूप अशा माझी जलरूपिणी तनु आहे. अर्थात्, माझ्यापासूनच कृष्णेची उत्पत्ति झाली आहे. हिचा प्रभाव श्रेष्ठ लोक जाणतात. अशी ही श्रीकृष्णा माता हरिहरस्वरूपिणी आहे. याविषयीं आणखी दुसरेंहि प्रमाण असें आहे कीं, कृष्णा विष्णुतनुः साक्षाद्वेण्या देवो महेश्वरः ॥ (कृ. मा.) कृष्णा ही साक्षात् विष्णुतनु असून वेणी ही शिवरूपिणी आहे. ही वेणी नदी कृष्णा नदीमध्यें अंतर्भूत होऊन म्हणजे, कृष्णा, वेणी या दोन नद्यांचा संगम होऊन पुढें वेणी नदी ही कृष्णेच्याच स्वरूपानें वाहूं लागली आहे म्हणून 'हरीशात्मा कृष्णा,' असें मूळ श्लोकामध्यें म्हटलें आहे.

२ हरेः सांघ्र्युद्भूताः—गंगा ही भगवान् श्रीविष्णूच्या चरणांगुष्ठापासून प्रगट झाली. याचा पूर्ववृत्तान्त असा आहे कीं, सूर्यवंशामध्यें उत्पन्न झालेला श्रीमान् 'सगर नांवाचा राजा, यांस वैदर्भी व शैब्या अशा दोन स्त्रिया होत्या. त्यांपैकीं शैब्येस असमंजा नांवाचा विख्यात पुत्र झाला. वैदर्भीनें आपणांस पुत्र होण्याकरितां श्रीशंकराची आराधना केली. ईशकृपेनें ती गर्भवती होऊन शंभर वर्षांनीं मांसपिंड प्रसूत झाली. तें पाहून ती अत्यन्त दुःखित झाली असतां

शंभुर्ब्राम्हणरूपेण तत्समीपं जगाम ह ।
चकार संविभज्यैतत्पिंडं षष्टि सहस्रधा ॥ देवीभागवत ॥

श्रीशंकरानीं ब्राह्मण वेषानें येऊन त्याचे साठ हजार तुकडे केले, व त्यापासून साठ हजार पुत्र झाले. ते अश्व शोधण्याकरितां गेले असतां कपिल महामुनींच्या क्रोधाग्नीनें दग्ध झाले. असमंजानें भूलोकीं गंगा आणून त्यांचा उद्धार करण्याकरितां लक्ष वर्षे तपश्चर्या केली. तो कालवश झाल्यानंतर त्याचा मुलगा अंशुमान यानेंहि तितकीच तपश्चर्या केली. त्यानंतर त्याचा पुत्र भगीरथ यानेंहि तितकीच तपश्चर्या केली असतां त्यास श्रीविष्णूचें दर्शन होऊन इच्छेप्रमाणें पूर्वजोद्धाररूपवराची प्राप्ति

झाली व गंगेस पूर्वी सरस्वतीचा शाप झाला असल्यामुळें या भरतखंडामध्यें जाण्याची श्रीविष्णूंनीं आज्ञा केली. या भूलोकामध्यें येऊन सगरपुत्रांचा उद्धार केला असतां या ठिकाणचें तिचें विशेष माहात्म्यहि निवेदन केलें. भगीरथानें गंगेची स्तुति करून तिला भूमीवरती आणलें व सगरपुत्रांचा उद्धार केला. अत्यन्त श्रेष्ठ अशा या गंगेच्या उदकामध्यें स्नान केलें असतां किंवा केवळ नामस्मरणानेंहि मनुष्य आपल्या सर्व पापांपासून मुक्त होऊन अंतीं वैकुंठलोकाची प्राप्ती होते:—

गंगा गंगेति यो ब्रूयाद्योजनानां शतैरपि ॥
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ( स्कंदपुराण )

असें हें गंगेचें विशेष माहात्म्य आहे. कारण लोकोद्धारार्थ गोपालसुंदरीसंज्ञक राधाकृष्णाच्या अंशापासून गोलोकांमध्यें गंगा ही निर्माण झाली आहे.

स एव द्रवरूपा सा गंगा गोलोकसंभवा ॥
राधाकृष्णांगसंभूता भुक्तिमुक्तिफलप्रदा ( देवीभागवत )

अशी ही राधाकृष्णाच्या अंशापासून उत्पन्न झालेली गंगा भोग व मोक्षरूप फळ देणारी असून भगवान् श्रीविष्णूच्या चरणांगुष्ठापासून प्रगट झाली आहे. याविषयीं पूर्व इतिहास असा आहे कीं, गंगा ही भगवान् श्रीविष्णूच्या चरणांगुष्ठापासून कशी प्रगट झाली असा नारदांनीं नारायणास प्रश्न केला असतां नारायण सांगतात:—

पुरा बभूव गोलोके सा गंगा द्रवरूपिणी ।
राधाकृष्णांगसंभूता तदंशा तत्स्वरूपिणी ॥ ( देवीभागवत )

पूर्वी गोलोकामध्यें राधाकृष्णाच्या शरीरापासून तदंशभुत तत्स्वरूपिणी अशी ही जलरूपिणी गंगा निर्माण झाली. नवयौवनसंपन्न, सर्वाभरणभूषित, शरदृतूंतील मध्यान्हकालच्या सूर्याप्रमाणें तेजस्वी व सस्मित मुखकमल असलेली, तप्त सुवर्णाप्रमाणें वर्ण असून, शरदृतूंतील चंद्राप्रमाणें जिची कांति आहे व सुमनोहर, अप्रतिम रूप असलेली जलाधिष्ठान देवता गंगा

सकाम अशी श्रीकृष्णाच्या पार्श्वभागीं प्राप्त झाली. तिला पाहून श्रीकृष्णासन्निध असलेल्या राधेस क्रोध उत्पन्न झाला व तिला उद्देशून कांहीं बोलण्याकरितां प्रवृत्त झाली असतां भीतिग्रस्त झालेल्या गंगेनें स्वजलामध्यें प्रवेश केला. आपल्या योगसामर्थ्यानें राधेनें हें जाणून एका घोटामध्यें सर्व जल प्राशन करण्यास प्रारंभ केला; तेव्हां गंगेनें आपल्या योगसामर्थ्यानें श्रीकृष्णाच्या चरणकमलामध्यें प्रवेश करून श्रीकृष्णास शरण गेली. सर्वत्र जलरहित झाल्यामुळें सर्वांचे कंठ शुष्क झाले, जलज जंतूंचा नाश होऊं लागला. तेव्हां भीतिग्रस्त झालेले देव भगवंतास शरण आले असतां भगवंतांचा अभिप्राय जाणून ब्रह्मादिक देवांनीं राधेची स्तुति केली कीं, ' गंगा ही श्रीकृष्णांशभूत व त्वदंशभूत असल्यामुळें तूं तिची माता आहेस, म्हणून कन्येप्रमाणें तूं तिचा स्वीकार कर.'

ब्रह्मणो वचनं श्रुत्वा स्वीचकार च सस्मिता ॥
बहिर्बभूव सा कृष्णपादांगुष्ठनखाग्रतः ॥ ( देवीभागवत )

अशी ब्रह्मदेवाची स्तुति श्रवण करून राधेनें तिचा स्वीकार केला असतां भगवान् श्रीकृष्णाच्या पादांगुष्ठनखाग्रापासून गंगा बाहेर प्राप्त झाली.

गोलोके च स्थिता गंगा वैकुंठे शिवलोकके ॥
ब्रह्मलोके स्थितान्यत्र यत्र यत्र पुरःस्थिता ॥
तत्रैव सा गता गंगा चाज्ञया परमात्मनः ॥
निर्गता विष्णुपादाब्जात्तेन विष्णुपदी स्मृता ॥ ( दे. भा. )

गोलोकामध्यें वास्तव्य करणारी गंगा वैकुंठ, शिवलोक, ब्रह्मलोक वगैरे ज्या ज्या स्थानीं पूर्वी वास्तव्य करीत होती त्या त्या स्थानीं वास्तव्य करण्याकरितां भगवंताच्या आज्ञेप्रमाणें त्याच ठिकाणीं श्रीविष्णूच्या चरणकमलापासून प्रगट झाली, म्हणून तिला विष्णुपदी असें म्हणतात. सारांश, गंगा ही साक्षात् भगवत्तनु नसून अंशभूत अशी श्रीविष्णूच्या चरणांगुष्ठापासून प्रगट झाली आहे व कृष्णा ही साक्षात् विष्णुतनूच आहे, यास प्रमाणवाक्य नारदांनीं ऋषींना सांगितलें आहे.

एवमेषा जगन्माता कृष्णा विष्णुतनुः स्वयं ।।

माहात्म्यमस्यास्त्यखिलमनेकं को वदिष्यति ।। ( कृष्णामाहात्म्य )

जगताच्या स्थितीकरितां निर्माण झालेली व जगन्माता असलेली अशी ही कृष्णा साक्षात् विष्णुतनूच आहे. हिचें अनेक प्रकारचें संपूर्ण माहात्म्य सांगण्यास कोण समर्थ आहे ?

( गते जीवे कन्यां. श्लो. ११ )—कन्याराशीस बृहस्पति ( गुरु ) गेला असतां एक वर्षपर्यंत गंगा ही कृष्णेशीं समागम पावते. याविषयीं ऋषि व स्कंद यांचा संवादरूप पूर्व इतिहास असा आहे कीं, ऋषींनीं हें माहात्म्य श्रवण करण्याकरितां स्कंदास प्रश्न केला असतांना स्कंद सांगतात—पूर्वी दिवोदास नांवाचा राजा काशीस राज्य करीत होता. त्या वेळीं सगळ्या ऋषींनीं व देवांनीं काशीचा परित्याग केला. शंकर मंदराचल पर्वतावर गेले ( दिवोदास राजा राज्य करीत असतांना देवांनीं व ऋषींनीं काशीचा परित्याग करण्याचें कारण मूळ ग्रंथामध्यें कांहींच लिहिलें नाहीं. तथापि अनुमानावरून असें वाटतें कीं, या राजास हैहय कुलोत्पन्न राजांनीं अतिशय त्रास दिला व याचें राज्य हरण करून यास पळवून लावलें. तोच त्रास ऋषींना व देवानांही झालेला असावा. ) ऋषींनीं तीर्थयात्रेच्या निमित्तानें दक्षिण दिशेस प्रयाण करून गोदातीरीं प्राप्त झाले व कांहीं ऋषि त्याच ठिकाणीं राहिले. व्यासादि कांहीं ऋषि व दत्तात्रेयादि महायोगी तीर्थयात्रा करीत सह्याद्रि पर्वतावर प्राप्त झाले. त्या ठिकाणीं कृष्णावेणी अवलोकन करून गतश्रम झाले असतां सर्वांस मोठा आनंद झाला व त्यांना अशी इच्छा उत्पन्न झाली कीं, त्रैलोक्य पावन करणारी गंगा या ठिकाणीं यावी ही गोष्ट तपश्चर्येनें साध्य होणारी आहे, म्हणून एकाग्र अंतःकरणानें तपश्चर्या केली. त्यायोगें नारायण संतुष्ट होऊन वर देण्याकरितां आले असतां ऋषींनीं प्रार्थना केली कीं, आपल्या चरणकमलापासून उत्पन्न झालेली गंगा भूलोकीं आणून कृष्णवेणीशीं तिचा योग करावा, म्हणजे कन्याराशीस गुरु गेला असतां ती सर्वांचा उद्धार करील. ऋषींच्या प्रार्थनेनुसार भगवंतांनीं गंगेचें स्मरण केलें. तात्काल भगवंताची आज्ञा धारण करणारी गंगा त्या ठिकाणीं प्राप्त झाली, व भगवंताचा

अभिप्राय जाणून त्यांच्या आज्ञेनुसार गंगेचा कृष्णेशीं संयोग होऊन कन्या राशीस गुरु गेला असतां ( म्हणजे प्रत्येक बारा वर्षांनीं ) अवश्य येईन असा नियमही केला. सारांश, प्रत्येक बारा वर्षांनीं कन्यागतामध्यें उत्तर दिशेच्या कुंडांतून ( मुखांतून) गंगा प्रगट होऊन कृष्णेशीं समागम पावते. या कन्यागताचें माहात्म्य फारच मोठें आहे.

यः कृष्णवेण्यां मनुजः प्रयाति कन्यागते देवगुरौ प्रयत्नात् ॥
स चायुरारोग्यमहाविभूतिं स धर्मसिद्धिं लभते मनुष्यः ॥
( कृ. मा. )

कन्याराशीस देवांचा गुरु ( बृहस्पति ) गेला असतां जो मनुष्य कृष्णावेणीप्रत प्रयत्नानें गमन करितो त्यास आयुष्य, आरोग्य, महाविभूतित्व व धर्मसिद्धि यांचा लाभ होतो.

तस्मात्सर्वप्रयत्नेन कन्याराशिगते गुरौ ॥
कृष्णवेण्यां समासाद्य प्रायश्चित्तं चरेत्सुधीः ॥ ( कृ. मा. )

याकरितां कन्याराशीस गुरु गेला असतां अत्यन्त प्रयत्नानें कृष्णवेणीसन्निध गमन करून ज्ञानी मनुष्यानें प्रायश्चित्ताचें आचरण करावें. हें प्रायश्चित्त ( म्हणजे तीर्थयात्रेचा विधि ) व याचें आणखीही विशेष फळ पुढीलप्रमाणें आहे.

मुंडनं चोपवासं च हिरण्यश्राद्धमत्र ये ॥
करिष्यंति नरा भक्त्या पितृनुद्धारयंति ते ॥
कन्यागते गुरौ यस्तु तीर्थश्राद्धं करोति वै ॥
पितरो द्वादशाब्दं तु तृप्तिं यांति न चान्यथा ॥ ( कृ. मा. )

या ठिकाणीं ( कन्यागतामध्यें ) जे लोक भक्तीनें मुंडन, उपवास व हिरण्यश्राद्ध करितात ते आपल्या पितरांचा उद्धार करितात. कन्याराशीस गुरु गेला असतां जो मनुष्य तीर्थश्राद्ध करतो त्याचे पितर बारा वर्षेपर्यंत तृप्त होतात. या ( तीर्थ ) श्राद्धावांचून त्यांची तृप्ति होत नाहीं. असें हें तीर्थश्राद्धाचें विशेष माहात्म्य आहे.

तीर्थोपवासः कर्तव्यः शिरसो मुंडनं तथा ।।
शिरोगतानि पापानि यांति मुंडनयोगतः ।। ( काशीखंड )

पापापासून मुक्त होण्याकरितां कन्यागतासारख्या महापर्वणीचे वेळीं क्षेत्रामध्यें कृष्णातीरीं गमन करून प्रायश्चित्तांग मुंडन व उपवास अवश्य करावे. ( कारण ) मुंडनाच्या योगानें मस्तकावरील केशांचा आश्रय करून वास्तव्य करणारीं पापें दूर होतात. यावरून मस्तकावरील केश हें पापांचें आश्रयस्थान आहे. परंतु सांप्रतकाळीं पाश्चात्य लोकांच्या संसर्गानें किंवा सौंदर्य नष्ट होईल अशा भीतीनें—

यानि कानि च पापानि ब्रह्महत्यासमानि च ।।
केशानाश्रित्य तिष्ठंति तस्मात्केशान्वपाम्यहम् ।।

असा मंत्र म्हणून मस्तकावरील केश तसेच ठेवून दाढीमिशांचें वपन केलें जातें तें यथाशास्त्र होतें काय याचा विचार करणें आवश्यक आहे. ' शिखाकक्षोपस्थवर्ज्यं केशश्मश्रुलोमनखानि वापयित्वा, क्षौरं तु दाक्षिण-कर्णमूलमारभ्य हनुश्मश्रुवामकर्णमूलशिरोभागस्थकेशकृंतननखच्छेदमेव ' अशीं नारायणभट्टींतील वाक्यें आहेत. यांतील श्मश्रु या शब्दानें दाढी व मिशा एवढेच ग्रहण करण्याबद्दल रघुवंश व छांदोग्योपनिषद् यांमध्यें प्रमाण आहे व ' तद्वृद्धौ श्मश्रुपुंमुखे ', असा अमरकोश आहे. म्हणजे पुरुषाच्या मुखावर वाढलेले रोम यांना श्मश्रु अशी संज्ञा आहे. यावरून श्मश्रु या पदानें मुखभागावरील केश ( म्हणजे दाढी व मिशा ) यांचेंच ग्रहण होत असल्यामुळें केवळ या केशांच्या वपनानें मुंडन होतें असें मानलें तर वरील वाक्यामध्यें ' शिखाकक्षोपस्थवर्ज्यं केशश्मश्रुलोमनखानि ' असे जे भिन्न शब्द आहेत त्यांतील शिखा वर्ज करून केशांचें वपन सांगणें व्यर्थ होईल. यावरून असें सिद्ध होतें कीं, मस्तकावरील केशांचेंही वपन झालें पाहिजे. दुसऱ्या वाक्यामध्यें शिरोभागस्थ केश असें स्पष्ट म्हटलेंच आहे. कारण मुंडन यांतील मूळ शब्द मुंड असा असून याचा अर्थ ' मुंडं शिरः, ' असा केला आहे व त्यापासून वपना-र्थक मुंडन असा शब्द झाला आहे. मस्तकावरील केश काढणें म्हणजे

मुंडन करणें असा याचा अर्थ होतो. मुंडन, वपन, क्षौर हे शब्द एकाच अर्थाचे आहेत. व पापेंही मस्तकावरील केशांचा आश्रय करून राहतात असें पूर्वी सांगितलें आहे. यावरून मुंडन, वपन, अथवा क्षौर हें मस्तकावरील केशांसुद्धां श्मश्रुलोमादिकांचें झालें पाहिजे असें धर्मशास्त्र आहे. हें मुंडन तीरवासीयांनाहि आवश्यक आहे. याविषयीं अशी शंका उत्पन्न होणेचा संभव आहे कीं—

मुंडनं चोपवासश्च गोदायां सिंहगे गुरौ ॥

कन्यागते तु कृष्णायां न तु तत्तीरवासिनाम् ॥ ( स्कंदपुराण )

यावरून तीरवासीयांना मुंडनाची आवश्यकता नाहीं, परंतु जन्मास आल्यानंतर ज्ञानावस्थेपासून मुंडनकाळापर्यंत गोदेच्या अगर कृष्णेच्या तीरावर ज्यांचें अव्यवहित असें वास्तव्य झालें आहे त्यांचेंच तीरवासी या पदानें ग्रहण केलें आहे. म्हणून कांहीं काळपर्यंत येऊन ज्यांनीं वास्तव्य केलें आहे अशा परग्रामीयांचें तीरवासी या पदानें ग्रहण होत नाहीं. कारण तीरवासी हा शब्द ताच्छील्यवाचक आहे, म्हणून अशा तीरवासीयांना मुंडनादि कर्म हें आवश्यक आहेच व हे काम्य असल्यामुळें आपल्या पितरांची तृप्ती होऊन त्यांना सद्गतीच्या इच्छेनें तीरवासी यांनींही करणें आवश्यक आहे. याविषयीं विस्तारभयास्तव अधिक विवेचन करीत नाहीं. तीर्थयात्रेस गेल्यानंतर हें मुंडन तात्काळ करावें. कारण तें होईपर्यंत तो मनुष्य अशुचि असतो याविषयीं—

॥ यावन्मुंडनपर्यंतं तावत्त्वं तस्य सूतकम् ॥

असें वचन आहे. आतां तीर्थयात्रेच्या विधीचें थोडक्यांत दिग्दर्शन करितों. यात्रेस निघण्यापूर्वी मंगलस्नान करून संकल्प करावा. गणपतिपूजन, स्वस्तिवाचन, नांदीश्राद्ध करावें, कृष्णवेणीसन्निध गेल्यानंतर महाफल दक्षिणा ठेवून साष्टांग नमस्कार करावा. अमंत्रक स्नान करून सकलपापक्षयार्थ प्रायश्चित्तांग वपनाचा संकल्प करावा. ब्रह्मदंड घेऊन ब्राह्मणास प्रदक्षिणा करावी व तें द्रव्य ब्राह्मणास देऊन नमस्कार करावा. अपसव्य करून समस्त पितरांचा उच्चार करावा, सव्य करून ब्राह्मणांची आज्ञा घेऊन वपन करावें. स्नान करून पातकांचा उच्चार करावा, व

षडब्दादि शास्त्रविहित प्रायश्चित्त सोडावें, नंतर स्नानविधि करून अर्घ्ये द्यावीं ( सौभाग्यवती स्त्रियांनीं हरिद्रास्नान करावें ) स्नानांगतर्पण करून शुक्लवस्त्र, तिलक, धारण करून तीर्थोपवासाचा मंत्र म्हणावा. देव, ऋषि, पितृतर्पण करून वपनांग हिरण्यश्राद्ध करावें, प्रायश्चित्तांग दशदानें द्यावीं.

गोभूतिलहिरण्याज्यवासो धान्यं गुडानि च ।।
रौप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ।।

अशीं हीं दश दानें आहेत. नंतर भूयसी दक्षिणा देऊन बृहस्पति व कृष्णवेणीपूजन करावें, याकरितां षोडश प्रमाणांची अथवा यथाशक्ति सुवर्णाची गुरूची प्रतिमा करावी व चांदीची कृष्णवेणीची प्रतिमा करावी. चांदीच्या इंद्र, ब्रह्म यांच्या प्रतिमा कराव्या व विधियुक्त पूजन करावें, अथवा श्राद्धाचे दुसरे दिवशीं गंगाराधनेचा संप्रदाय असलेनें त्या दिवशीं पूजन करावें. श्राद्धामध्यें—

अर्घ्यमावाहनं चैव द्विजांगुष्ठनिवेशनं ।।
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ।।

इतकीं कर्में वर्ज करावीं. दुसरे दिवशीं भगवान् दत्तात्रेयाची महापूजा, कृष्णवेणीपूजन, सौभाग्यवायनदान, दंपतीपूजन, गोप्रदान वगैरे देवताकृत्य करावें.

यात्रोत्सवविधिं कृत्वा स्वस्थाने गमनं चरेत् ।।
गृहे कृष्णावेणिपूजां कुर्यात्स्वैर्बांधवैः सह ।।
दंपतीं भोजयेत्पश्चाद्ब्राह्मणांश्च स्वशक्तितः ।।
यात्रायाः परिपूर्त्यर्थमन्यथा निष्फला भवेत् ।।

स्वगृहीं गमन करून यात्रेच्या परिपूर्ततेकरितां बांधवांसहवर्तमान कृष्णवेणीपूजन, दंपतीपूजन, ब्राह्मणभोजन वगैरे करावें. अन्यथा निष्फल होतें, असें हें तीर्थविधीचें दिग्दर्शन थोडक्यांत केलें आहे. पांडवांनीं बारा वर्षे वनवास भोगतेवेळीं अकरा वर्षे तीर्थयात्रा करून बाराबे वर्षी एक वर्षपर्यंत कृष्णेच्या तीरीं वास्तव्य करून द्वादशाब्दव्रत पूर्ण केलें—

वर्षं तत्र स्थितो राजा यावत्कन्यागते गुरौ ॥
द्वादशाब्दव्रतं पूर्णं ततो भद्रमवाप सः ॥ ( कृ. मा. )

त्या योगानें त्याचें भद्र म्हणजे कल्याण झालें. त्यामुळें त्या ठिकाणीं असलेलें शिवलिंग 'भद्रेश्वर' या नावांनीं प्रसिद्ध झालें. हें स्थान साताऱ्या-नजिक असलेल्या 'माहुली' क्षेत्राचें सन्निध असावें. असें हें कन्यागताचें माहात्म्य अवर्णनीय असून ज्या ठिकाणीं 'दत्तात्रेय श्रीपादश्रीवल्लभ श्रीनृसिंहसरस्वती' हे पादुकारूपानें वास्तव्य करितात असें हें श्रीकृष्णा-वेणीमातेचें हृदयस्थान असलेलें श्रीनृसिंहवाटिकाक्षेत्र असामान्यच आहे. कारण ज्याप्रमाणें मातेनें आपल्या बालकास हृदयाशीं धरावें त्या प्रमाणें ही सर्व जगताचीच माता असल्यामुळें आपल्या भक्तांना हृदयाशीं धरील हें निराळें काय सांगावयाचें ?

(पितृनुद्दिश्यैकं. श्लोक १३) याविषयीं प्रमाणभूत पूर्व इतिहास असा आहे कीं, पूर्वी परशुरामांनीं एकवीस वेळां क्षत्रियांचा वध करून त्यांच्या रक्तानें पितरांचें तर्पण केलें, आणि ब्राह्मणशरीरानें आपल्या हातून घड-लेल्या अत्यंत निंद्य अशा क्षत्रियवधरूप पातकाची निवृत्ति याच देहांनीं करून श्रेष्ठ अशा उदकानें आपल्या पितरांचें तर्पण करून त्यांना सद्गतीची प्राप्ती करून द्यावी, असा मनांत विचार करून ऋषींना प्रश्न केला कीं— माझ्या हातून घडलेल्या पातकापासून मुक्त होऊन मला सुख प्राप्त होईल व पितरांना सद्गति मिळेल असें कृष्णेच्या तीरावर असलेलें तीर्थ सांगा. तें ऐकून ऋषि म्हणतात, रामा ! कृष्णवेणीच्या तीरावर रामगया नांवाचें पितरांना मोक्ष देणारें रामलिंगाच्या अग्रभागीं तीर्थ आहे. व त्या ठिकाणीं तारकसंज्ञक रामपद आहे. संसारशोकांनीं संतप्त झालेल्या लोकांना तें तारणारें आहे.

यत्र चायं दशरथो वालुकापिंडमुत्तमं ॥
सीताहस्तगतं प्राप्य लेभे पदमनुत्तमम् ॥ (कृ. मा.)

याच ठिकाणीं दशरथानें सीतेच्या हातून वालुकापिंड ग्रहण करून त्यास उत्तम गतीची प्राप्ति झाली. असें त्यांचें वाक्य ऐकून भार्गवरामानें ऋषींसहवर्तमान कृष्णेच्या तीरीं गमन केलें—

पितॄन् संतर्प्य विधिवज्जामदग्न्यः प्रतापवान् ॥
ययौ स्वधाम सहसा आनंदितविभावनः ॥ (कृ. मा.)

आणि त्या ठिकाणीं पितरांचें तर्पण करून आनंदानें स्वगृहीं गमन केलें. या तर्पणानें पातकांपासून मुक्त होऊन पितरांना मोक्षाची प्राप्ति झाली. श्रीक्षेत्र नरसोबाचेवाडीपासून दक्षिणेस सहा मैलांवर टाकळी नांवाचें गांव आहे. या गांवापासून एक मैलाचे अंतरावर कृष्णेच्या तीरीं रामलिंग नांवाचें स्थान असून त्या ठिकाणीं रामपद आहे. परशुरामांनीं आपल्या पितरांना उद्देशून तर्पण केलेलें स्थान बहुतकरून हेंच असावें. तर्पणामध्यें अथवा सर्व पितरांना उद्देशून ज्या वेळीं कर्म करावयाचें असतें त्या पितरांचा संग्रह पुढील श्लोकामध्यें केला आहे. 'तातांबात्रितयं सपत्नजननी मातामहादित्रयं सस्त्रि स्त्रीतनयादितातजननिस्वभ्रातरस्तत्स्त्रियः ॥ तातांबात्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयगयातीर्थे तथा तर्पणे ॥' महालयामध्यें, गयेवरती अथवा कोणत्याही तीर्थावरती (संग्रह) पितरांना उद्देशून कर्म करते वेळीं व नित्य तर्पणांमध्येंही इतक्या पितरांचा संग्रह केलेला आहे. वरील श्लोकामध्यें गयेचें नांव आहे यावरून व श्रीक्षेत्र नरसोबावाडीच्या पुढें तीर्थें सांगण्याचा जो क्रम आहे त्यावरूनही परशुरामानें केलेल्या तर्पणाचें टाकळीसन्निध असलेलें रामगया नांवाचेंच स्थान असावें. या टाकळी गांवानजीक मोठा भस्माचा डोंगर असून पूर्वी भगवान् श्रीरामचंद्रांनीं केलेल्या यज्ञांतील भस्माचा तो डोंगर आहे अशी प्रसिद्धी आहे. येथील भस्म लावण्याकरितां नेहमीं लोक नेत असतात.

(महापाप्याकल्पं. श्लो. १४) महापापी मनुष्यास आकल्पान्त नरकाची प्राप्ती होते.

ब्रह्महा हेमहारी च सुरापो गुरुतल्पगः ॥
महापातकिनस्त्वेते तत्संसर्गी च पंचमः ॥

ब्रह्महत्या, सुवर्णचोरी, सुरापान आणि गुरुपत्नीगमन करणारे हे चार महापातकी होतात व यांच्याशीं संसर्ग करणारा पांचवा महापातकी होतो. हीं महापापें ज्याच्या हातून झालेलीं आहेत अथवा यांच्याशीं संसर्ग

करणारा असा एखादा महापापी मनुष्य दैववशात् आकल्पान्त नरकामध्यें पडलेला असला तथापि त्यास सुगति मिळण्याकरितां त्याच्या वंशजांनीं कृष्णेच्या तीरीं वृषोत्सर्ग, नारायणबलि अथवा त्रिपिंडीश्राद्ध केलें असतां तात्काल दुर्लभ अशा मोक्षाची प्राप्ती होते. प्रेतयोनीपासून मुक्त करणारें असें हें वृषोत्सर्ग नांवाचें कर्म नित्य व काम्य आहे. कारण—

न करोति वृषोत्सर्गं सुतीर्थे वा जलांजलिं ॥
न ददाति सुतो यस्तु पितुरुच्चार एव सः ॥
एकादशेन्हि प्रेतस्य यस्य नोत्सृज्यते वृषः ॥
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ (मत्स्यपुराण)

जो पुत्र पित्याला उद्देशून वृषोत्सर्ग करीत नाहीं अथवा श्रेष्ठ तीर्थांचे ठिकाणीं उदकांजलि देत नाहीं तो पित्याचा उच्चार (पुरीष-मळ) च आहे. ज्या प्रेताच्या उद्देशानें अकरावे दिवशीं वृषोत्सर्ग केला नसेल त्याला शेंकडों श्राद्धें दिलीं तरी त्याचें प्रेतत्व सुस्थिर राहतें. यावरून हा नित्य आहे.

एवं कृत्वा ह्यवाप्नोति फलं वाजिमखोदितम् ॥
यमुद्दिश्योत्सृजेन्नीलं स लभेत परां गतिं ॥ (भविष्यपुराण)

याप्रमाणें वृषोत्सर्ग केला असतां करणाराला अश्वमेधाचें फळ प्राप्त होतें. ज्याच्या उद्देशानें वृषोत्सर्ग केला असेल त्यास उत्तम गति मिळते. आपणांस उत्तम गति मिळण्याकरितां स्वतः केलेला जो वृषोत्सर्ग त्यास 'काम्यवृषोत्सर्ग' म्हणतात—

कार्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् ॥
शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम् ॥ (मत्स्यपुराण)

जो मनुष्य कार्तिकी पौर्णिमेस वृषोत्सर्ग करून नक्त करील त्यास शिवपदाची प्राप्ती होते. कारण हें शिवव्रत म्हटलें आहे. यावरून हा काम्यही आहे. नित्य व काम्य अशा या वृषोत्सर्गानें कोणत्याही पातकापासून त्या मनुष्याची शुद्धि होते. याविषयीं पुढीलप्रमाणें वचन आहे—

ब्रह्महत्यादिपापानि ज्ञानाज्ञानकृतानि च ॥
नीलोद्वाहेन शुध्येत्तु समुद्रप्लवनेन वा ॥ (गरुडपुराण)

नीलवृषोत्सर्ग केला असतां अथवा समुद्रस्नान केलें असतां ब्रह्महत्यादि महापापें आणि ज्ञानाज्ञानावस्थेमध्यें घडलेलीं पापें यांपासून तो मनुष्य शुद्ध होतो. सर्व पातकांपासून मुक्त होऊन उत्तम गतीची प्राप्ती होण्याकरितां और्ध्वदेहिक कर्मांतील मुख्य असलेला हा वृषोत्सर्ग जर झाला नाहीं तर मृतास प्रेतयोनीची प्राप्ती होऊन वंशजांना निरानिराळ्या स्वरूपांनीं प्रेतपीडा होते. याचीं लक्षणें शास्त्रामध्यें बरींच दिलेलीं आहेत. एखाद्याचें और्ध्वदेहिक कर्म करणारा कोणी नाहीं असा मनुष्य मृत होऊन त्यास जर प्रेतयोनीची प्राप्ति झाली असेल तर त्याला उत्तम गतीची प्राप्ति होण्याकरितां राजानें अथवा ज्यास प्रेतपीडेचीं लक्षणें दिसूं लागलेलीं आहेत अशा आप्तेष्टांतील कोणीही मनुष्यानें हा वृषोत्सर्ग केला असतां त्यांस उत्तम गतीची प्राप्ती होते. याविषयीं बभ्रुवाहन राजाचा इतिहास पुराणामध्यें दिलेला आहे. बभ्रुवाहन राजास वनामध्यें प्रेतदर्शन झालें असतां त्यांचा संवाद होऊन प्रेतानें राजास उत्तम प्रकारचा मणि देऊन—

वृषोत्सर्गो यदि भवेत्प्रेतत्वान्मुच्यते तदा ॥
तस्मान्नृप त्वमप्येवं वृषोत्सर्गं कुरु प्रभो ॥ (गरुडपुराण)

वृषोत्सर्ग जर होईल तर प्रेतयोनीपासून मुक्त होतो. याकरितां मला उद्देशून तूं वृषोत्सर्ग कर असें सांगितलें. राजानें त्यास उद्देशून वृषोत्सर्ग केल्यामुळें प्रेतयोनीपासून मुक्त होऊन स्वर्गप्राप्ति झाली. (हा इतिहास बराच मोठा असल्यामुळें त्याचा सारांश दिलेला आहे)

श्राद्धेन परदत्तेन गतः प्रेतोऽपि सद्गतिं ॥
किं पुनः पुत्रदत्तेन पिता यातीति चाद्भुतं ॥ (गरुडपुराण)

असें हें श्राद्ध (वृषोत्सर्गादि कर्म) दुसऱ्यानें केलें असतांही सद्गतीची प्राप्ति होते. मग हें कर्म पुत्रानें केलें असतां पिता सद्गतीस जाईल यांत आश्चर्य कोणतें ? या वृषोत्सर्गाकरितां योग्य अशा वृषाचीं लक्षणें शास्त्रामध्यें बहुत सांगितलीं आहेत. त्यांमध्यें नीलवृष हा मुख्य आहे. नीलवृषाचें लक्षण—

लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः ॥
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥ ( ब्रह्मपुराण )

ज्याचा वर्ण लाल आहे, मुख व पुच्छ हीं पांढरीं आहेत आणि खूर व शृंगें हीं शुभ्र आहेत तो नील वृष समजावा. अशीं आणखीही कांहीं नील-वृषाचीं लक्षणें सांगितलेलीं आहेत. यथोक्त वृष न मिळेल तर जसा मिळेल तसा दोन वर्षांचा, एक वर्षाचा वृष, एक वर्षाहून अधिक वयाच्या चार, दोन वत्सतरी असाव्या अथवा एक असावी. याचा विधि असा आहे कीं, प्रेताच्या नामगोत्राचा उच्चार करून संकल्प करावा. स्थंडिलावर अग्नि-प्रतिष्ठा करून रुद्र, सोम, इंद्र या तीन देवतांस उद्देशून चरु, पायस, यावक असे तीन हवि तयार करून हवन करावे. वृष वत्सतरींचें पूजन करून चारीही दिशांना त्यांचा उत्सर्ग करावा. वृष पुच्छावर प्रेताच्या नामगोत्राचा उच्चार करून तर्पण करावें. दक्षिणेसहित तीन आमान्नें द्यावीं. तील, उदकुंभ, गाय, हिरण्य, वस्त्र हीं दानें दक्षिणेसहित द्यावीं. ( पति, पुत्रवती स्त्रियेकरितां केवळ गोप्रदान करावें ) असें हें दिग्दर्शन केलें आहे. हा वृषोत्सर्ग मातापितरांकरितां मृताचे अकरावे दिवशीं करावा. काम्य वृषोत्सर्गाचे काल बरेच आहेत व नित्य, काम्य वृषोत्सर्गा-मध्यें थोडा फरक आहे, तें विस्तारभयास्तव येथें दिलें नाहीं.

वृषोत्सर्जनवेलायां वृषाभावः कथंचन ॥
मृद्भिः पिष्टैश्च दर्भैर्वा वृषं कृत्वा विसर्जयेत्
न शक्यते वृषोत्सर्गो होमं वा तत्र कारयेत् ॥ ( गरुडपुराण )

वृषोत्सर्जनाचे वेळीं यथोक्त वृष न मिळेल तर मृत्तिकेचा, पिष्टमय अथवा दर्भांचा वृष करून उत्सर्ग करावा. वृषोत्सर्ग करण्याचें सामर्थ्य नसेल तर त्या ठिकाणीं केवळ होम करावा. या वृषोत्सर्गाप्रमाणेंच, मृतास सद्गतीची प्राप्ती होण्याकरितां नारायणबलिसंज्ञक कर्माचीही आवश्यकता आहे. कारण—

दुर्मरणांनीं जे मृत झाले आहेत त्यांना दुर्गतीची प्राप्ती होते व ते और्ध्व-देहिक संस्कारास अयोग्य होतात. या दुर्मरणाचीं लक्षणें शास्त्रामध्यें बरींच आहेत. त्यांतील कांहीं लक्षणें येथें देत आहें.

शस्त्रघातमृता ये च मृता ये च चतुष्पथे ॥
व्याघ्रैः सर्पैर्वराहैश्च भक्षिताः श्वापदैस्तथा ॥ १ ॥
वर्णसंकरकर्तारो ब्रह्मसूत्रविवर्जिताः ॥
ब्राह्मणानां गुरूणां च तथा ये लिंगभेदकाः ॥ २ ॥
जलाग्निबंधनभ्रष्टा तथा चात्मप्रहिंसकाः ॥
संतानरहिता ये च क्षयरोगेण ये मृताः ॥
एतैश्चान्यैश्च बहुभिर्म्रियंते चाथ मृत्युभिः ॥
यान्ति ते नरके घोरे ये च म्लेच्छादिभिर्हताः ॥
उदक्यासूतकीशूद्रारजकीसंगदूषिताः ॥
तेन पापेन नरकान्मुक्ताः प्रेतत्वभागिनः ॥ ( विधानमाला )

अशा शस्त्रघातादि दुर्मरणांनीं व निरनिराळ्या पापकर्मांनीं जे मृत झाले आहेत त्यांना नरकाची प्राप्ती होते व अंतीं ते प्रेतयोनीस जातात. या प्रेतांची वंशजांना अथवा आप्तेष्ट लोकांना निरनिराळ्या स्वरूपांनीं पीडा होते. या प्रेतपीडेचीं लक्षणें शास्त्रामध्यें बरींच आहेत. असे दुर्मरणांनीं मृत होऊन जे प्रेतयोनीस गेले आहेत त्यांना और्ध्वदेहिकसंस्कार-योग्यता प्राप्त होण्याकरितां नारायणबलि सांगितला आहे.

'संवत्सरोत्तरं पुत्रादिस्तदीय आत्मघातादिपापानुसारेण प्रायश्चित्तं कृत्वा सद्यःकरणपक्षे पूर्वोक्तद्विगुणप्रायश्चित्तं कृत्वा नारायणबलिं च कृत्वौर्ध्वदेहिकं कुर्यात्.' वत्सरांतीं पुत्रादिकांनीं मृताच्या आत्मघातादि पापास अनुसरून प्रायश्चित्त करून ( सोडून ) अथवा सद्यःकरणपक्षीं पूर्वोक्त द्विगुण प्रायश्चित्त करून ( सोडून ) आणि नारायणबलि करून और्ध्वदेहिक करावें.

नारायणबलिं सम्यग्यः करोति मृतस्य च ॥
प्रेतश्चापि च कर्ता च उभौ तौ फलभागिनौ ॥
अपमृत्युविनष्टानां नारायणबलिः शुभः ॥ ( महाभारत )

अशा रीतीनें जो मनुष्य मृतास उद्देशून यथाविधि नारायणबलि करतो त्याच्या फळाचें प्रेत व कर्ता असे दोघेही फळभागी होतात. याकरितां दुर्मरणानें अथवा अपमृत्यूनें मृत होऊन जे प्रेतयोनीस गेले आहेत त्यांना सद्गती मिळून प्रेतपीडा दूर होण्याकरितां शुभकारक असा हा नारायण-बलि करणें आवश्यक आहे. हे कर्म करण्याकरितां—

शुक्लैकादश्यां पंचम्यां श्रवणे वा ॥

असे याचे काल सांगितले आहेत. याचा विधि असा आहे कीं—उक्त काळीं नदीतीरीं अथवा देवालयामध्यें ब्राह्मणांची अनुज्ञा घेऊन प्रायश्चित्ता-चरणपूर्वक विष्णु, रुद्र, यम नारायणप्रेत, ब्रह्म, या पांच देवतांची स्थापना करून पूजन करावें. स्थंडिलावर अग्नि स्थापन करून निर्वाण करून चरू तयार करावा व पुरुषसूक्तानें चरूच्या सोळा आहुती द्याव्या. प्रेताच्या नामगोत्राचा उच्चार करून तर्पण करावें. हिरण्यदान करून दहा पिंड द्यावे, देवतांना उद्देशून बलिदान करावें फळें, साखर, गूळ, मध, तूप हीं दानें द्यावीं. रात्रीं जागरण करून दुसरे दिवशीं श्राद्ध करावें. देवतांचें उत्तराराधन करून पीठदान करावें, तर्पण करून दशदानें द्यावीं ही दिशा दाखविली आहे.

यद्येतत्क्रियते विष्णोर्बलिसंज्ञं विधानकं ॥
यथावित्तं यथाकालं लोकानंत्याय कल्पते ॥ ( महाभारत )

अशा रीतीनें आपल्या शक्तीप्रमाणें हें नारायणबलिसंज्ञक कर्म यथा-विधि केलें असतां मोक्षाची प्राप्ती होते—

नागबळींचा उल्लेख मूळ श्लोकामध्यें नाहीं, तथापि सर्पदंशानें जे मृत झाले आहेत त्यांना दुर्गतीची प्राप्ती होते. याकरितां वत्सरान्तीं नागबलि करून सुवर्णनागदान व गोप्रदान करून नारायणबलि करावा असें वचन आहे. अथवा ज्याच्या हातून या जन्मामध्यें किंवा पूर्व जन्मामध्यें सर्पवध झाला आहे त्या दोषापासून मुक्त होण्याकरितां सर्पसंस्कार ( नागबलि ) करावा लागतो. म्हणून याचीहि माहिती आवश्यक असल्यामुळें थोडक्या-मध्यें दिग्दर्शन करितों. याचा विधि असा आहे कीं, नदीतीरीं अथवा

पुण्यतीर्थी गमन करून पूर्वदिवशीं दंपतींनीं उपोषण करावें. दुसरे दिवशीं वपन करून प्रायश्चित्ताचरणपूर्वक लोहदंडदान करून पिष्टमय नागाचें पूजन करून दहन करावें. मृत्तिकेच्या तीन नागांचें पूजन करून पिंडादि द्यावें. तिलांजलि देऊन पुनः बारा पिंड द्यावे व बलिदान करावें. तीन दिवस दंपतींनीं अशौच धरून चवथे दिवशीं शुद्ध झाल्यानंतर श्राद्ध करावें. दशदानें द्यावीं. सुवर्णनागाचें पूजन करून दक्षिणेसह दान करावें. सांगतासिद्ध्यर्थ गोप्रदान करून ब्राह्मणभोजन घालावें. सुवर्णनागाचें प्रमाण एक भार दिलें आहे, हें धर्मशास्त्रांतील भाराचें प्रमाण फारच मोठें असल्यामुळें सध्यांच्या मानानें सव्वा तोळा निदान एक तोळा अथवा आपल्या शक्तीप्रमाणें सुवर्णनाग करावा असें वचन आहे.

एवं कृते विधाने वै सर्पसंस्कारकर्मणि ॥
सर्पहिंसाकृतात्पापान्मुच्यते नात्र संशयः ॥ ( शौनक )
स्वशाखोक्तविधानेन इत्थं कुर्याद्यथातथं ॥
प्रेतत्वान्मोचयेत्तांस्तु स्वर्गमार्गं नयेत च ॥ ( गरुडपुराण )

याप्रमाणें स्वशाखोक्त विधानांनीं सर्पसंस्कार कर्मामध्यें यथाविधि विधान केलें असतां सर्पहिंसा केलेल्या पातकापासून मुक्त होतो. व ज्यांना प्रेतत्वाची प्राप्ति झाली असेल त्यांना प्रेतयोनीपासून मुक्त करून स्वर्गमार्गानीं नेलें जातें असें याचें फळ आहे. असेंच त्रिपिंडीश्राद्धहि प्रेतास उत्तम गती देऊन प्रेतपीडा दूर करणारें आहे. प्रेतयोनि प्राप्त होण्याचीं कारणें.

बाला युवानो वृद्धाश्च कुले यस्य मृता ननु ॥
लुप्तपिंडा लुप्ततोयाः स्नानधर्मं विना मृताः ॥
एवं नानाविधा विप्राः प्रेत्य प्रेता भवंति ते ॥
स्त्रियश्च पुरुषश्चैव इहैवाप्यन्यजन्मनि ॥
कुले ग्रामे वने गेहे पीडा कुर्वंति ते च वै ॥
तेषां पीडाविनाशार्थं त्रिपिंडीश्राद्धमाचरेत् ॥ ( स्कंदपुराण )

ज्याच्या कुलामध्यें बाल, तरुण, वृद्ध मृत होऊन त्यांचें और्ध्वदेहिक कर्म झालें नसेल किंवा स्नानादि धर्मांनीं रहित असलेलें नाना प्रकारचे ब्राह्मणहि स्त्रीपुरुष या जन्मीं किंवा पुढच्या जन्मीं प्रेतयोनीस जाऊन, कुळामध्यें, गांवामध्यें व वनामध्यें किंवा घरामध्यें पीडा देतात, त्यांची पीडा दूर होण्याकरितां त्रिपिंडीश्राद्ध करावें. याचा विधि असा आहे कीं, वपन करून द्वादशादि कृच्छ्र प्रायश्चित्ताचें आचरण करावें. स्नानविधि करून संकल्प करावा. ब्रह्मा, विष्णु, रुद्र या तीन देवतांची स्थापना करून पूजन करावें, विष्णुपूजन करावें. तीन पिंडदान करावें. तीन ब्राह्मणांना क्षण देऊन श्राद्ध करावें. पंखा, पादत्राण, वस्त्र व कमंडलु हीं दानें द्यावीं. दशदानें द्यावीं. सांगतासिध्यर्थ गोप्रदान करून ब्राह्मणभोजन घालावें. असे तिन्ही विधींतील मुख्य कर्मांचें मार्गदर्शन केलें आहे. नारायणबलि, नागबलि हीं दोन्हीं कर्मे मोठया खर्चाचीं असल्यामुळें ज्यास सामर्थ्य नसेल त्यांनीं केवळ त्रिपिंडीश्राद्ध केलें असतांहि प्रेतपीडानिवृत्ति होते हें मूळ श्लोकामध्यें 'वा' पद घालून सिद्ध केलेंच आहे. हीं कर्मे तीर्थावरती, देवालयामध्यें, नदीतीरीं अथवा संगमावरती करावीं. त्यामध्येंहि श्रीनृसिंहवाटिकाक्षेत्रामध्यें असलेला श्रीकृष्णवेणिपंचगंगासंगम हा या कर्मास अवर्णनीयच आहे. कारण—

संगमं पंचनद्याश्च कृष्णवेण्या सुसंगतम् ॥
तत्तीर्थं वर्णितुं शक्तो न कोऽपि भुवनत्रये ॥ (कृ. मा.)

असें या संगमाचें माहात्म्य आहे, व हीं कर्मे या नृसिंहवाटिका क्षेत्रामध्येंच व्हावींत, असें श्री. प. प. श्रीवासुदेवानंदसरस्वती (टेंबे) स्वामिमहाराज यांच्या मुखांतून निघालेले उद्गार ज्यांनीं ऐकले आहेत ती येथील वृद्ध मंडळी सांगतात.

(सुतं लेभे वन्ध्या–श्लो. १५) चार प्रकारच्या वंध्या स्त्रिया आहेत–

अनपत्या भवेद्वन्ध्या मृतवत्साऽपरा स्मृता ॥
स्रवद्गर्भा तथैवान्या काकवन्ध्याऽपरा भवेत् ॥ (वायुपुराण)

अनपत्या, मृतवत्सा, स्रवद्गर्भा, काकवन्ध्या, असे जे वन्ध्या स्त्रियांमध्यें

बाईट व्हावें असा नेहमीं विचार करणें इत्यादि मनानें केलेलें माझें पाप तूं नाहीसें कर. हे गुरुमते, शमिततृष्णे ! माझ्या सर्व पापांचा परिहार करून तूं विजयी हो. हे श्रीकृष्णे, तुला नमस्कार असो. ॥ ४६ ॥

एवं पापपरिहारं कुरु वा न वाऽथाप्येवमस्त्विति प्रार्थयति ।—

अर्थः—याप्रमाणें पापांचा नाश कर अथवा करूं नकोस. पण मी जें मागतों तेवढें मात्र दे अशी प्रार्थना करतात.

( ४७ )

अन्वयः—हे गतिदे ! ( श्रीकृष्णे ) त्वदीयात्मस्पृष्टः स्पर्शनः मां स्पृशतु । उत त्वदीयं पानीयं मम वदनाब्जे पततु । अहो ( मातः ) उत तुहिनशिशिरे त्वन्नीरे मे अङ्गं पततु बत । हे कृष्णे ! ते नमः ! हे गुरुमते, शमिततृष्णे जय ॥ ४७ ॥

अर्थः—हे सुगतिदायिनी श्रीकृष्णे, तुझ्या पवित्र तुषारांनीं युक्त असा वायु माझ्या सर्वांगाला स्पर्श करो. आणि तुझें निर्मल व अतिशय पवित्र उदक माझ्या मुखीं पडो. आणखी हे आई ! तुझ्या या शीतल जलांत माझा देह पडो. यापेक्षां जास्त कांहींहि नको. एवढ्यानेंच मी कृतार्थ आहें. हे श्रीकृष्णे ! तुला माझा नमस्कार असो. हे गुरुमते, शमिततृष्णे ! माझी इच्छा पूर्ण करून तूं त्रैलोक्यांत विजयी हो. ॥ ४७ ॥

( ४८ )

अन्वयः—हे आधिमथने ! अमले ! हे प्रवरसरित् ! ( श्रीकृष्णे ) अत्र सर्वैः तीर्थैः ( च ) सर्वाभिः सरिद्भिः अपि नुताम् । देवेन्द्रैः मुनिभिः अपि अत्यादृततटाम् । त्वां कः न सेवेत ! हे कृष्णे ! ते नमः । हे गुरुमते, हे शमिततृष्णे, जय ॥ ४८ ॥

अर्थः—सर्व मानसिक व्यथेला दूर करणाऱ्या निर्मल व सर्व गंगादि नद्यांमध्यें श्रेष्ठ श्रीकृष्णे ! या भूलोकीं पुष्करादि सर्व तीर्थें आणि गंगादि सर्व पवित्र नद्या जिची स्तुति गातात आणि इन्द्रादि देव आणि मोठमोठे तपस्वी मुनि जिच्या तीरावर वास करतात, हे माते, अशा तुझा कोण

बरें आश्रय करणार नाहीं ? तर सर्व करतीलच. हे कृष्णे ! तुला माझा नमस्कार असो. हे गुरुमते, शमिततृष्णे ! तुझा जयजयकार असो ॥४८॥

अतः त्वद्दर्शनं नित्यमस्त्विति पृथ्वीवृत्तेनाह ।—

अर्थः—म्हणून तुझें दर्शन नेहमीं असो, असें पृथ्वीनामवृत्तानें प्रतिपादन करतात.

( ४९ )

अन्वयः—हे अनुकम्पोदये ! अभये, धरेन्द्रतनये ( श्रीकृष्णे ! ) त्वां उपगतः अस्मि । हे हरीशरूपिणि, ईश्वरि ( त्वं ) जय । हे मणिद्युते ! त्वा अर्थये । अये नदि ! मदीयं हृत् दीनतां न व्रजतु । हे असिते ! त्वये अक्षये अम्मये त्वदीये ते वपुषि ( मम ) दृक् अस्तु ॥ ४९ ॥

अर्थः—हे कृपाशालिनी ! भयहारिणी ! सह्याद्रिकन्ये ! श्रीकृष्णे ! मी तुला शरण आलों आहे. हे हरिहरस्वरूपिणी ! भगवति माते ! तूं माझा उद्धार करून आपला उत्कर्ष प्रकट कर. हे इन्द्रनीलमणिनिभे ! मी तुझी प्रार्थना करतों. हे नदि श्रीकृष्णे ! आतां माझें अंतःकरण दीन न होवो, आणि हे निर्मले ! तुझा त्या नित्य व जलरूपस्वरूपीं माझी सदा दृष्टि असो. तुला माझा नमस्कार असो. ॥ ४९ ॥

कृष्णाया अविकृतत्वमाह शार्दूलविक्रीडितेन ।—

अर्थः—श्रीकृष्णावेणीच्या नामरूपामध्यें इतर गंगादिनद्यांप्रमाणें कसलाहि विकार–फेरफार झाला नाहीं असे शार्दूलविक्रीडितनामकवृत्तानें सांगतात.

( ५० )

अन्वयः—काचित् ( यमुना ) प्रभोः पदयुगं क्षालयति । काचित् ( गंगा ) अङ्कं आरोहति । का अपि ( नर्मदा ) प्रभोः स्वेदात् प्रकटिता । का अपि ( गोदावरी ) जटादितः प्रकटिता । अपरा ( मंदाकिनी ) जटायां बद्धा ( अभूत् ) अपरा ( गंगा शन्तनुना ) उद्वाहिता ( अपरा रेवा भीमेन उद्वाहिता ) काचन मानिनी ( गङ्गा ) उच्चैः इह पतिता । का अपि ( भोगवती ) अधः गता । हे कृष्णे ! ( त्वं ) इह ते सत् ( कृष्णा इति ) नाम च रूपं अपि न त्यक्तम् ॥ ५० ॥

अर्थः—यमुना नदीनें "कालिंदी" असें नांव धारण करून ती श्रीकृष्णपत्नी झाली व दासीप्रमाणें पादप्रक्षालन केलें, व गंगा श्रीशंकराची दुसरी पत्नी होऊन त्यांच्या डोक्यावर जाऊन बसली. आणि कोणी एक नर्मदा नदी शंकराच्या घर्मापासून निर्माण झाली. कोणी गोदावरी नदी श्रीशंकराच्या जटेपासून निघाली. दुसरी मंदाकिनी नदी शंकराचे जटेंत बद्ध झाली. कोणी गंगानामक नदी शंतनुराजाची कामिनी झाली. रेवा-नदीचें भीमसेनानें पाणिग्रहण केलें आणि मोठ्या मानीं गंगा व सरस्वती या नद्या कलह करून विष्णुलोकांतून भूलोकीं पडल्या, व भोगावती नदी पाताळांत गेली. अशा सर्व नद्या कांहीं ना कांहीं विकृति झालेल्या आहेत. पण हे कृष्णे ! तूं मात्र आपलें पवित्र श्रीकृष्णा असें नाम व श्यामवर्ण रूप या दोहोंचाहि त्याग केला नाहींस. हे निर्विकारिणी तुला माझें नमन असो. ॥ ५० ॥

स्रग्धरावृत्तेन हारबंधेन स्तौति—

अर्थः—हारबंधांत गुंफलेल्या स्रग्धरावृत्तानें स्तवन करतात.

( ५१ )

अन्वयः—हे देवेड्ये, वेदवेद्ये, भयहृत् कृष्णे त्वं जय जय । हे कृपा-कृष्टकृष्णे ! तव भवहवराख्यां ग्रहीतॄन् त्राहि त्राहि । हे सत्यसन्धे ! ( त्वं नः ) सदा भूयः भूयः अभयोक्तीः वितर । हे कामेश या इह मोह-प्रहर्त्री मेध्या तव तनुः ( विद्यते ) सा आदरात् मे मनसि ( च ) नयनयोः अस्तु ॥ ५१ ॥

अर्थः—सर्वदेवस्तुते ! वेदांनीं जाणलेल्या व भय दूर करणाऱ्या कृष्णे, तूं या भूलोकीं सर्व प्रकारच्या उत्कर्षांनीं विजयी हो. हे सदये माते ! जन्ममरणापासून मुक्त करणारें तुझें नामस्मरण करणाऱ्याचें तूं रक्षण कर. हे सत्यप्रतिज्ञे ! तूं आम्हांला पुनः पुनः अभय देत जा. हे भक्तकामकल्पद्रुमा, श्रीदत्ता तुझी या कृष्णावेणीतीरावर मोहाला दूर करणारी व पवित्र मूर्ति आहे. ती मोठ्या आदरानें माझ्या मनांत आणि दोन्ही नयनांत नेहमीं असो. एवढ्यानेंच मी कृतकृत्य आहें. ॥ ५१ ॥

श्रीकृष्णाश्रयान्मुक्तिरित्यनुष्टुभाऽऽह गोमीत्रिकाबंधेन—

**अर्थः**—श्रीकृष्णानदीच्या आश्रयानें सद्गति मिळते असें गोमुत्रिका· नामक बंधांत गुंफलेल्या अनुष्टुप्छंदानें सांगतात.

( ५२ )

**अन्वयः**—यः भक्तः कृष्णां वृणुते । ( सः ) निरन्तरं पदं यायात् । ( च ) यः अभक्तः तृष्णां वृणुते ( सः ) निरन्तरं खेदं यायात् ॥ ५२ ॥

**अर्थः**—जो पुण्यवान् भक्त स्नानादिरूपानें कृष्णेचें सेवन करतो, तो भेदरहित शाश्वत पदाला जातो, आणि जो अभक्त तृष्णेच्या मागें लागतो, तो नेहमीं दुःखाला प्राप्त होतो. ॥ ५२ ॥

( ५३ )

**अन्वयः**—कृष्णास्थप्रेरितमतिः वासुदेवसरस्वती कृष्णां अस्तौत् । ततः नरसिंहसरस्वती प्रीयात् ॥ १ ॥

**अर्थः**—श्रीकृष्णातीरावर असलेल्या श्रीदत्ताच्या प्रेरणेनें श्रीवासुदेवानंदसरस्वतींनीं ही कृष्णालहरीरूपानें कृष्णेची स्तुति केली आहे. त्यायोगें श्रीनरसिंहसरस्वती संतुष्ट होवोत.

श्रीकृष्णार्पणमस्तु ।

---

श्रीगणेशाय नमः ॥

# पंचपाक्षिकप्रारंभः

दत्तः स्वात्मापि येनेह स्वभक्तायात्रये स वः ।
दत्तात्रेयोऽखिलापद्भ्यः सदाव्याद्भगवान्प्रभुः ॥ १ ॥

इह खलु स्कंधत्रयात्मकज्योतिःशास्त्रविचारासमर्थानां मंदबुद्धीनां प्रतिपत्तिसौकर्यार्थं स्कांदोक्तपंचपाक्षिकविद्यासारसंग्रहविवरणं संक्षेपतो वक्ष्यति—

पंचात्मात्रिसुतेरितेन सदसज्ज्ञानाप्तये कथ्यते ।
पंचाभीष्टखगस्थितिः फलयुता ज्योतिर्विदानंददा ।
येनात्तममहाभराक्षमजरं सद्द्वादशारं धृतं ॥
चक्रं सद्दृढनाभिकं स भगवान्प्रीयात्तया स्वेष्टदः ॥ २ ॥

पंचो विस्तीर्णो व्यापक इति यावत् आत्मा स्वरूपं यस्य स तथा यद्वाऽधिष्ठानादीनां पंचादीनां ब्रह्मोपलब्धिस्थानानां आत्मा प्रेरकः ॥ उक्तं च गीतायां 'अधिष्ठानं तथा कर्ता'इत्यादि ॥ यद्वा पृथिव्यादिपंचभूतानामात्मांतर्यामी 'यः पृथिव्यां तिष्ठन्'इत्यादिश्रुतेः॥ यद्वा पंच प्राणा आत्मोपलब्धिद्वारं यस्य ॥ यदुक्तं भगवत्पूज्यपादैः ' प्राणायामव्रतं तच्छ्रुतिशिरसि मतं स्वात्मलब्ध्यै न चान्यत्'इति ॥ यद्वा चक्षुरादीनां पंचानामात्मा 'श्रोत्रस्य श्रोत्रं'इति श्रुतेः॥ विष्णवादिपंचायतनरूपो वा 'एकोऽहं पंचधा जात' इति स्मृतेः ॥ यद्वा प्रलये पंचभूतान्यत्तीत्यात्मा पंचाधिकरणैः स्वभक्तानाप्नोतीति वा ॥ पंचप्राणैर्जगदादत्त इति वा पंचविषयानत्तीति वा ॥ यदुक्तं— 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य संततो भावस्तेनात्मेति च गीयते' इत्यात्मशब्दव्युत्पत्तेरिति भावः ॥ यद्वा प्रकरणत्वात्पंच-

संवत्सरमय आत्मा यस्य पंचसंवत्सरमयमिति ज्योतिःशास्त्रे प्रसिद्धम् ॥ एवं पंचात्मेतिशब्दानां नानार्थत्वेपि विस्तरभिया नेहोच्यते ॥ पंचात्मा योऽत्रिसुतः तेनेरितेन प्रेर्यमाणेन मया सदसज्ज्ञानाप्तये शुभाशुभज्ञानाप्तये पंचाभीष्टखगानां श्येनादीनां भोजनादिरूपा स्थितिः सफला फलसहिता ॥ फलाव्यभिचाराभावात्प्रयासाभावाच्च ज्योतिर्विदानंददा कथ्यते ॥ ननु ज्योतिःशास्त्रे विद्यमाने सौकर्यार्थं वेदबाह्यमिदं कथमादरणीयमिति चेदुच्यते ॥ अत्र खगशब्देन ग्रहा अभ्युपगंतव्याः ॥ तत्र क्रूरत्वाद्वर्णैक्याच्च रविभौमयोरैक्यं ॥ पितृपुत्रत्वाच्छुभत्वाच्च चंद्रबुधयोरैक्यम् ॥ एवमंतर्भावेन पंचैव खगा ग्रहाः परोक्षत्वेनोक्ताः ॥ 'परोक्षप्रिया इव हि देवा' इति श्रुतेः ॥ एतन्मनसि निधाय प्रार्थनामिषेण वैदिकं चक्रं निर्दिशति येनेति ॥ येन भगवताऽतप्तः महाभरः अक्षो यस्येदृशं अजरमक्षीणं द्वादशमासरूपा अरा यस्य तत्प्रत्यग्गतिकं प्राग्गतिग्रहाक्रांतं चक्रं लोकभ्रमणाय धृतम् ॥ तथा च श्रुतिः 'पंचारे चक्रे परिवर्तमाने तस्मिन्नार्पिता भुवनानि विश्वा । तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ॥ द्वादशारं नहि तज्जरायेत्यादि ॥ यद्वा शरीराकाशे पंच खगाः पंच प्राणा इति व्याख्येयं ॥ श्रुतिश्च ''उत्पत्तिमायतिं स्थानं विभुत्वं चैव पंचधा ॥ अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुत' इति ॥ ईश्वरः सर्वभूतानामिति स्मृतेर्हार्दं चक्रं वा व्याख्येयम् ॥ तयाभीष्टखगस्थित्या भगवान् प्रीयात् ॥ ननु 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ॥ ज्ञानविज्ञानयोश्चैव षण्णां भग इतिस्मृतिस्तद्वान्कथमनया प्रीयादिति चेद्यत्करोषि यदश्नासीत्यादिप्रमाणेन तत्प्रीत्यर्थं समर्पितं चेद्भगवानपि तुष्येदेव ॥ पत्रं पुष्पं फलं तोयमित्यादिस्मृतेः ॥ एतेन कवेर्निरहंकारत्वं लोकोपकृतये द्वैतप्रवृत्तावपि पारमार्थिकी दृष्टिश्चेति ध्वन्यते ॥ स्वानां स्वयमुत्पादितानां सर्वेषामिष्टं ददातीति स्वेष्टदः ॥ नन्वायुरन्नं प्रयच्छतीति स्मृतेरन्नाच्छादने दद्यात्कथं स्वेष्टं ददातीत्युक्तम् ॥ एवं चेत्केपि दुःखभाजो

न स्युः तथा न दृश्यतेऽतएव स्वानां स्वभक्तानामिष्टं ददातीति एवं चेत्तेऽपि धनादिना प्रमादिनो भवेयुरतएव स्वेषामिष्टं पुत्रादिसंबंधं द्यतीति। एतदुक्तं गारुडे 'यावतः कुरुते जंतुः संबंधान्मनसः प्रियान्। तावंतोस्य निखन्यंते हृदये शोकशंकव' इति ॥ भागवते च 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्' इति ॥ यद्वा स्वेभ्यः तवाहमिति बुद्ध्या शरणं गतेभ्यो मुमुक्षुभ्य इष्टं निःश्रेयसं ददातीति ॥ यद्वा ज्ञानी त्वात्मैव मे मतमित्युक्तेः स्वरूपभूता ये मुक्तास्तेषामिष्टं विदेहमुक्तिसौख्यं ददातीति। एवं यथायथमूह्यम् ॥ विस्तरभयादुपरम्यते ॥ शार्दूलविक्रीडितमिदम् ॥ १ ॥

अथ श्येनादीनां स्वरवर्णादि शालिन्याह—

अकछडधभवाः श्येनस्य वेः पिंगलस्येखजढनमश काके
ऊगञ्जौ तो यपौ षः ॥ घटथफरसए स्युः कुक्कुटे ओ मयूरे
चठदबलहवर्णाः प्रष्टृपूर्वाक्षरोत्थाः ॥ २ ॥

श्येनस्य वेः पक्षिणः अकारः स्वरः अकछडधभवा वर्णाः ॥ १ ॥ पिंगलस्य इकारः स्वरः खजढनमशा वर्णाः ॥२॥ काकस्य उकारः स्वरः गञतयपषा वर्णाः ॥३॥ कुक्कुटस्य ए स्वरः घटथफरसा वर्णाः ॥ ४ ॥ मयूरस्य ओकारः स्वरः चठदबलहवर्णाः ॥५॥ अत्र ह्रस्वदीर्घस्वरयोरैक्यं एवं प्रष्टुः प्रथमाक्षरस्य यः स्वरो वर्णो वा स पक्षी प्रश्नकाले ज्ञातव्यः॥२॥

अथ श्येनस्य तत्त्वादींद्रवंशयाह—

भूः प्राक्शिशुः कुक्कुटकाकवैरिकः पीतोश्विषड्भो नृशिफो
चतुष्पदी ॥ नंदार्जसिंहालिभविष्यकारयुक् प्राणः कदक्षी द्विज
आद्य आद्ययुक् ॥ ४ ॥

भूर्भूमितत्वं, प्राक् पूर्वदिक् आग्नेयी च, शिशुर्बालः पंचाब्दः कुक्कुटकाकवैरिणौ अर्थात् पिंगलमयूरौ मित्रे। पीतवर्णः आश्विन्यादिषण्नक्षत्राणि

पंचेति ग्रंथांतरे। ना पुंल्लिंगं शिफा मूलचिंता चतुष्पाज्जातिः। नंदातिथयः १-६-११ अजासिंहालयः मेषसिंहवृश्चिकलग्नानि भविष्यकालः। कारौ सूर्यभौमवारौ प्राणवायुः कं शिरोवयवः दक्षो दक्षिणांगं द्विजो ब्राह्मणवर्णः। आद्ययुक् सद्योजातदेवतामंत्रयुक्त एतैर्विशिष्टः श्येनः आद्यपक्षी ॥ ३ ॥

पिंगलस्य वसंततिलकयाह—

वार्दक्षिणा नृपकुमारककाकवैरिरादित्यषड्भशुचिजीववधूर्द्वि पादी ॥ भद्रेंदुविन्मिथुनकर्कवधूभभूतापानास्यवामकरवाम-युतश्च पिंगः ॥ ५ ॥

वार्जलतत्वं, दक्षिणादिक् नृपः क्षत्रियवर्णः किशोरः पंचदशाब्दः काकः शत्रुः श्येनकुक्कुटमयूरा मित्राणि। आदित्यषड्भः पुनर्वस्वादिषण्नक्षत्राणि शुचिः श्वेतवर्णः जीवचिंता वधूः स्त्रीलिंगं द्विपाज्जातिः भद्रातिथयः २-७-१२ चंद्रबुधवारौ मिथुनकर्ककन्यालग्नानि भूतकालः अपानवायुः आस्यं मुखावयवः वामकरो वामांगं वामदेवदेवतामंत्रयुक्तः एवंविधः पिंगः ॥ ४ ॥

काकस्य शार्दूलविक्रीडितेनाह—

प्रत्यग्विड्युववह्निधातुकरपंचर्क्षीजयाशृंगिपुंरक्तेज्यांत्यधनुर्भ दक्षहृदयव्यानान्वितः केकियुक् ॥ कालोघोरयुतो बली नच शिखी स्युः पादवृद्ध्याक्रमात्ताम्रश्येनकपिंगला बलिफलं स्यात्प्रष्टृकालोत्थयोः ॥ ६ ॥

प्रत्यक् पश्चिमदिक् विड्वैश्यवर्णः युवा तरुणश्चत्वारिंशाब्दः। अग्नितत्वं धातुचिंता करपंचर्क्षं हस्तादिपंच नक्षत्राणि जयातिथयः ३-८-१३ शृंगि जातिः पुंल्लिंगं रक्तवर्णः ईज्यो गुरुवारः अंत्यधनुर्भं मीनधनुर्लग्नं दक्षिणांगं हृदयस्थानं व्यानयुक्तः व्यानवायुः एतैरन्वित इत्यर्थः। केकियुक् मयूरो-

मित्रं अघोरदेवतामंत्रयुक्तः अनुक्तोपि भविष्यत्कालः भविष्यदर्थबोधकौ श्येनवायसपक्षिणावितिवचनात्। एवंविधः काको बली रूपबलः नच-शिखी बली अल्पबल इति भावः। ताम्रचूडश्येनपिंगलाः यथोत्तरबलिनः। ताम्रचूडः कुक्कुटः पृच्छकपक्षी च तात्कालिकांशपक्षी अनयोर्मध्ये यो बली तस्यावस्थावशात्फलं वाच्यं ॥ ५ ॥

कुक्कुटस्य शार्दूलविक्रीडितेनाह—

वातोदक्स्थविरासितांघ्रिजसुरेट्पंचर्क्षकाकारियुक् ।
पक्षीजीवशिफान्वितश्च मिथुनी रिक्तान्वितः शुक्रयुक् ॥
वामांगो वृषजूकभोगृहचरः स्याद्वर्तमानोस्य वै ।
देवस्तत्पुरुषो ह्युदानपवनः पृष्ठांगकः कुक्कुटः ॥ ७ ॥

वायुतत्त्वं उदग्दिक् स्थविरः सप्तत्यब्दः असितः कृष्णवर्णः अंघ्रिजः शूद्रवर्णः। सुरेट् पंचर्क्षं जेष्ठादिपंचनक्षत्राणि काको वैरिः श्येनपिंगलमयूरा मित्राणि पक्षिजातिः जीवमूलचिंता मिथुनी स्त्रीपुंसलिंगं रिक्तातिथयः ४-९-१४ शुक्रवारः वामांगं वृषजूकभः वृषतुला लग्नं गृहचारी वर्तमान-कालः तत्पुरुषदेवतामंत्रः उदानवायुः पृष्ठभागस्थानं एवंविधः कुक्कुटः ६

मयूरस्य शिखरिण्याह—

खमध्यस्थः प्रेतोऽधमकुलभवश्चित्रिततनु-
र्द्विषच्छ्येनारिष्टो वसुमुखभयुक् क्लीबशनियुक् ॥
समूलो व्यंघ्रिःस्यान्मृगघटभपूर्णा पदबली ।
समानी वामांगी गतसमयवित्सेश्वरशिखी ॥ ८ ॥

खं आकाशतत्त्वं मध्यस्थानं प्रेतो मृतावस्थः अधमकुलभवः संकरवर्णः चित्रकान्तिः श्येनकाकौ शत्रू पिंगलकुक्कुटौ मित्रे वसुमुखभयुक् धनिष्ठादि-पंचनक्षत्राणि क्लीबः नपूंसकः मूलचिंता द्व्यंघ्रिः द्विपाज्जातिः मृगघटभे

मकरकुंभलग्ने पूर्णातिथयः ५-१०-१५-३० पद्बली नाभेरधः पादपर्यंतं अंगं समानी समानवायुः वामांगं गतसमयो भूतकालः सेश्वर ईशान-देवतामंत्रयुक्तः एवंविधः शिखी मयूरः ॥ ७ ॥

इति संज्ञाध्यायः समाप्तः ॥ १ ॥

---

## द्वितीयोऽध्यायः

अथ बलानयनाध्यायो व्याख्यायते ॥ तावद्बलसाधनं स्रग्धरयाह—

पंचाप्तैकोत्तरांका शिखिनिशिचरताम्राद्यकाकौज आद्यं त्र्यंश-त्र्यार्यादि दिग्जं तिथिदिनभभजं स्वादिचेष्टासु तद्वत् ॥ स्वाद्यं-गेप्येवमेवं दृश इह हरिवत् स्वस्तृतीयेदृगाद्येन्त्यंत्ये रात्रावकाद्या विङञणलघवोन्यत्र दीर्घा घपूर्वे ॥ १ ॥

एकोत्तरांकाः १-२-३-४-५ पंचाप्ताः पंचभक्ताः शिख्यादेराद्यं नैस-र्गिकं बलं स्यात् । तद्यथा मयूरस्य० । १२।० कुक्कुटस्य० । २४।० श्येनस्य० । ३६।० पिंगलस्य० । ४८।० काकस्य १-०-० ( १ ) अर्या-दिदिग्जं शत्रुदिशि० । २०।० मित्रदिशि० । ४०।० स्वदिशि० १-०-० इदं दिग्बलं ( २ ) तिथिवारनक्षत्रलग्नजं कालबलं। शत्रुतिथ्यादौ० । २०।० मित्रातिथ्यादौ० । ४०।० स्वतिथ्यादौ १-०-० (३) स्वाभाविकी श्येनचेष्टा भोजनं, पिंगलस्य गमनं, काकस्य राज्यं, कुक्कुटस्य निद्रा, मयूरस्य मरणं। तत्र शत्रुचेष्टायां० । २०।० मित्रचेष्टायां । ४०।० स्वचेष्टायां १-०-० इदं चेष्टाबलं ( ४ ) मस्तकादिस्वाद्यंगस्पर्शेप्येवमेव । शत्रोरंगे०। २०।० मित्रस्यांगे०। ४०।० स्वांगे०। १-०-० इदं स्थानबलं ( ५ ) एवं दृशो दृग्बलं इह शास्त्रे स्वस्मात्तृतीये हरिवत् सिंहवद्दृष्टिः। एवं षड्बलैक्यं कार्यं। आद्ये शुक्लपक्षे दिवा कृष्णे रात्रौ अकाद्या वर्णाः अका-

घा ह्रांताः ङञणवर्जिताः क्रमेण श्येनादीनां लघुसंज्ञकाः अंत्ये कृष्णे घाद्या ह्रांताः दीर्घसंज्ञाः स्युः प्रयोजनं मूकप्रश्ने ॥ १ ॥

एतत्खगेहया नानाफलं तन्न बलं विना ॥
यः स्वात्मनि बलं युज्यात्स पूज्यः सर्वविद्भवेत् ॥ २ ॥

स्पष्टार्थमनुष्टुपूपद्यं । इति बलाध्यायो द्वितीयः ॥ २ ॥

---

## तृतीयोऽध्यायः

अथांशनयनाध्यायो व्याख्यायते ॥ अंशनयनं तावच्छिखरिण्याह-

स्वरार्णाशांगर्क्षान्यतमजतिथिव्यन्यतरसं-
भवव्योर्यः शूरो भवति तदवस्थोदितफलं ॥
भुजिर्यात्रा राज्यं शयनमरणेन्हः शरलवे ।
सितेन्ह्यंत्ये रात्रौ सममितरथान्यत्र गदितम् ॥ १ ॥

प्रश्नस्वरः अकरादिः अर्णः कादिः आशा पूर्वादिदिक् अंगं लग्नं ऋक्षं आश्विन्यादि ॥ एषां अन्यतमजः पक्षी स्वरार्णसंदेहे दिक्पक्षी तत्संदेहे लग्नपक्षी तत्संदेहे ऋक्षपक्षी वा ग्राह्यः । एवमेकः पक्षी एव गृहीतव्यः ॥ ततस्तिथिस्तात्कालिकी अनयोरसंदिग्धयोरन्यतमजः पक्षी ग्राह्यः । एवं द्वौ पक्षिणौ भवतः तयोर्मध्ये यः शूरः बली तदवस्थोदितफलं वाच्यं ॥ सांप्रदायविद एवमामनन्ति । एकः स्वरादिपक्षी अपरः वारांशपक्षी न तु केवलवारपक्षी एवं द्वयोर्मध्ये यो बली तदवस्थोदितफलं वाच्यं । अन्हः पंचमांशे क्रमेण भोजनाद्यवस्था ॥ शुक्ले दिवा कृष्णे रात्रौ समं । अन्यत्र कृष्णे दिवा शुक्ले रात्रौ अन्यथा व्यस्तं । तद्यथा त्रिंशद्दिनमानवासरे पंचधा-विभक्तप्रथमांशे षट् ६ घटीपर्यंतं भोजनं । १२ पर्यंतं गमनं । १८ घटीपर्यंतं राज्यं । २४ घटीपर्यंतं शयनं । ३० घटीपर्यंतं मरणं । एवं शुक्ले

दिवा कृष्णे रात्रौ ज्ञातव्यं। कृष्णे दिवा शुक्के रात्रौ ६ पर्यंतं मरणं। १२ घटीपर्यंतं निद्रा। १८ पर्यंतं राज्यं। २४ पर्यंतं गमनं। ३० घटीपर्यंतं भोजनं। एवं क्रमेण दिनमानानुसारेण प्रत्यहं ज्ञातव्यं ॥ १ ॥

रव्यादिवारेषु अंशक्रममाह स्रग्धरया–

**स्वांशे प्राक् पंचभक्ते स्वफलमितरवेः स्यात्क्रमाच्छ्येनपिंगौ।**
**काकस्ताम्रः शिखी स्वाग्रत इतरलवे ज्ञेयमेवं पुनश्च ॥**
**सूर्यारे चंद्रसौम्ये गुरुकविशनिषु ताम्रकाकौ च पिंगः।**
**श्येनः केकी च चंद्रार्कजफलसमता प्राग्वदन्यच्च कृष्णे ॥ २॥**

पंचभक्ते स्वांशे प्राक् स्वं फलं ततः इतरवेः पक्षिणः क्रमात् रविभौमयोः श्येनादिक्रमः ॥ चंद्रबुधयोः पिंगलादिक्रमः ॥ गुरौ काकादिक्रमः। शुक्रे कुक्कुटादिक्रमः। शनौ मयूरादिक्रमः। एवं शुक्के दिवा कृष्णे रात्रौ ज्ञेयं। अत्र मूलसूत्राणि। अरिपुकेतो ॥१॥ विष्णुस्तेलोकः ॥ २ ॥ उपेंद्रो हरिः ॥ ३ ॥ एकोनारिपुः ॥ ४ ॥ तोतारिपुके ॥ ५ ॥ अथ कृष्णे दिवा शुक्के रात्रौ रविभौमयोः कुक्कुटादिक्रमः। बुधे काकादिक्रमः। गुरौ पिंगलादिक्रमः शुक्रे श्येनादिक्रमः। शनिचंद्रवारे मयूरादिक्रमः। पंचभक्ते स्वांशे स्वतः क्रमः। द्वितीयाद्यंशे स्वाग्रतोग्रतः क्रमः। कृष्णे शनिचंद्रफलसमतान्यत्पूर्ववत्। अत्र सूत्राणि। एवं जुहोति ॥१॥ उन्मोदितेन ॥ २ ॥ इत्येवजुहो ॥३॥ अनुमोदिते ॥ ४ ॥ अमित्येतनु ॥ ५ ॥ इत्यंशानयनाध्यायस्तृतीयः ॥ ३ ॥

---

# चतुर्थोऽध्यायः

अथ फलाध्यायो व्याख्यायते

श्रीराज्यस्वर्घनष्टाप्तिजयहितसमृद्ध्यर्थलाभप्रसादारोग्येक्षा-
सिद्धिमोक्षोपशमशिवसुवृष्टिर्भुजीत्योस्तादन्यत् ।। भीनष्टाज्यागमे-
तिक्षयगदकपटाद्यन्नसुप्तौ मृतौ च व्यस्तं प्राप्तिर्गतौ चापि च-
युवतिसुखं स्थैर्यमल्पांबुराज्ये ।। १ ।।

श्रीशब्दो मंगलार्थोपि । पक्षिणां भोजनगमनयोः श्र्यादिफलं वाच्यं । तत्र श्रीः संपत् राज्यं प्रसिद्धं अधिकारो वा । स्वर्घः धान्यादिसमर्घता । नष्टाप्तिः नष्टवस्तुलाभः । जयो द्यूतवादकलहादिजयः । औषधादि-हितं । धनधान्यादिसमृद्धिः । अर्थः स्वाभीष्टार्थलाभः । प्रसादो देवराजा-दिप्रसन्नता । आरोग्यं रोगशांतिः । ईक्षा मित्रादिदर्शनं । सिद्धिः कार्य-सिद्धिः । मोक्षो बंधनान्निगडादेः । उपशमः मार्याद्युपद्रवशान्तिः । शिवं कल्याणं मंगलं वा । सुवृष्टिः कृषीवलाभिमतेति । अथ उक्तादन्यद्विपरीतं पृष्टं चेन्नेति वाच्यं । तथा भीर्भयं नष्टवस्तु आजिः कलहः आगमनं देशांत-रादागमनं । ईतिःप्रयाणं क्षयो नाशः मरणं वा गदो रोगः कपटं कूटकर्मादि जारणमारणप्रयोगो वा एतत्सर्वं नेति वाच्यं । अथ सुप्तौ निद्रावस्थायां मृतौ मरणावस्थायां श्रीराज्यादि सर्वं व्यस्तं वाच्यं । पुनश्च विशेषः । गतौ गमना-वस्थायां प्राप्तिः देशांतरागमनं वार्तालाभो वा तथा राज्यावस्थायां युवतिसुखं स्त्रीसौख्यं विवाहयोगो वा । स्थैर्यं अर्घादेः स्थिरत्वं । अल्पांबु खंडवृष्टिश्च । अन्यत्र श्रीराज्यादि सर्वं गमनवद्भविष्यत्येव ।। १ ।।

अथ भोजनादौ श्येनादीनामवस्थामाह स्रग्धरया—

भुक्त्याद्येत्रासनेतिस्थितिशयनलया ग्रामिकाकोवनेन्ये ताम्रो
गेही नृवत्स्त्री सुतयुतशिखिताम्रौ च काकोऽप्रजःस्वा।।स्वार्णांशेक्ये

**सुभोज्यं स्वहित इतरथासद्गमाद्यूह्यमेवं स्वाणांत्यौ तोकदौ स्तो न करट इतरो यत्नतो लिंगमंशात् ॥ २ ॥**

अत्र भोजनादौ यथाक्रमं स्थितिर्वाच्या केनचित्पृष्टेऽमुकोऽद्यसमये किं करोतीति तत्र यदि पक्षी भुंक्ते तदासौ उपविष्ट इति वाच्यं। यदा गच्छति तदागमनं।यदा राज्ये तदा स्थितिः।निद्रावस्थायां शय्योपविष्टः।मृतावरस्थायांगाढनिद्रया व्याप्त इति वाच्यं। ग्रामिकाकः काको ग्रामवासीत्यर्थः। अन्ये श्येनपिंगलमयूरा वने वनवासिनः।ताम्रो नामैकदेशग्रहणात्ताम्रचूडः कुक्कुटः कृकवाकस्ताम्रचूडः कुक्कुटश्चरणायुध इत्यमरः। गेही गृहवासी प्रयोजनं चोरादिज्ञानार्थं। नृवत्स्त्री यथा पुरुषस्य आदिवयस्तथा स्त्रियोपि वाच्यं। श्येनांशे कुमारी ८ पिंगलांशे किशोरी १६ काकांशे तरुणी ४० कुक्कुटांशे वृद्धा६०मयूरांशेतिवृद्धा७५सुतयुतशिखिताम्रा शिखी मयूरस्ताम्रः कुक्कुटः अनयोरंशे स्त्री पुरुषो वा जातापत्य इति वाच्यं। काकांशे वंध्या। श्येनपिंगलांशे स्वल्पप्रजा इति। स्वार्णांशैक्ये स्वा यदा पृथक्‌नामपक्षी प्रश्नस्वरपक्षी तात्कालिकांशपक्षी च त्रयाणां द्वयोर्वैकपाक्षित्वे स्वा स्वकीया सजातीया वा स्त्री वाच्या। अन्यथा परकीया। स्वहिते सुभोज्यं। पक्षी यदा स्वांशे तदा सुशोभनं भोजनं। मित्रांशेपि शोभनं मानपूर्वं मधुरप्रायं। अर्थाच्छत्रोरंशे कटुतिक्तादियुक्तं परिणामदोषकरं। एवं गमनादावप्यूह्यं। पुत्रप्राप्तिप्रश्ने स्वपक्षी ताकालिकपक्षी च यदि अंत्यौ कुक्कुटो मयूरो वा तदा संततिप्राप्तिः। न करटः प्रश्ने तथा काकश्चेत्संतानलाभो नैव। इतरौ पिंगलश्येनौ यत्नतः धर्मानुष्ठानादित्यसप्तमीव्रतभौमव्रतसंतानगोपालमंत्रजपपालकदानहरिवंशश्रवणनागबलिनारायणबल्यनुष्ठानतः संतानलाभो वाच्यः। लिंगमंशात् जायमानस्य संतानस्य स्त्रीपुंनपुंसकलिंगं पक्ष्यंशाद्वाच्यं ॥ २ ॥

युद्धकलहादौ संधिज्ञानमाह मंदाक्रांतया—

संधिःस्वांशौ युधि यदि हितौ चेद्रिपू न्यूनभंगो ।
राज्यस्थैर्यं बलिनि भुजि राज्येंत्यसुप्त्योस्तु हानिः ॥
भुक्तौ शूरे बलिहितलवेप्यन्नवस्त्रादिवृद्धि-
र्व्यापारेपि प्रवसतिषु सद्राजगत्योस्तथैव ॥ ३ ॥

स्वांशौ पृच्छकपक्षी अंशपक्षी च यदि हितौ परस्परं मित्रे तदा युधि युद्धे वादादौ वा संधिः॥तौ रिपू चेन्न्यूनभंगः। पृच्छकपक्षी निर्बलश्चेत्तत्पराजयः॥ अंशपक्षी निर्बलश्चेच्छत्रुपराजयः ॥ राज्यादिस्थैर्यप्रश्ने भुजि भोजनावस्थायां बलिष्ठे खगे काके वा राज्याधिकारादिस्थैर्यं वाच्यं ॥ एवं राज्यांशेपि । अंत्यसुप्त्योः मरणशयनयोः राज्यादिहानिर्वाच्या । अन्नवस्त्रादिवृद्धिप्रश्ने भुक्तौ भोजनावस्थायां बलिहितलवे बलिष्ठमित्रांशे भोजने च खगे सति-वृद्धिर्वाच्या ॥ व्यापारे राज्यांशे प्रवाससुखं । विषयप्रश्ने तु गमनांशे च खगे बलिष्ठे सति तद्वृद्धिर्वाच्या ॥ ३ ॥

चौर्यज्ञानमाह मंदाक्रांतया—

चौर्येंशाद्दिग्धनसमयहृज्जात्यवस्थादि वाच्यं ।
निद्रांतांशेर्पितहृतगतद्रव्यवार्तापि नैव ॥
लाभोन्यांशे बलिनि चपलं कृच्छ्रता दुर्बलेंभो-
वृद्धिःकूपादिषु जलखगात्तापवातौ तदंशात् ॥ ४ ॥

चौर्यप्रश्ने तात्कालिकांशात् धातुमूलादिधनं दिनादिसमयः हृज्जात्यवस्थादि चोरजात्यवस्थादि वाच्यं। निद्रामरणांशे अर्पितं व्यापारार्थं दत्तं चोरादिहृतं गतं नष्टं च यद्द्रव्यं तद्वार्तापि नैव लभ्या। अन्यांशे भोजनगमनराज्यांशे बलिनि पक्षिणि सति लाभो वाच्यः। चपलं शीघ्रं दुर्बलेंशे कृच्छ्रतः प्रयत्नवशाल्लाभः । जलवृद्धिप्रश्ने जलखगात् तत्काले पिंगले बलिष्ठे सति कूपतडागादिषु जलवृद्धिः । तदंशात्तापवातौ काकांशे तत्कालिके ताप ऊष्मादिः कुक्कुटांशे बहुवातः ॥ ४ ॥

वृष्टिज्ञानं शिखरिण्याह—

बली स्वंशः पिंगो यदि शशिबुधाहेऽनरिलवे-
प्यकाले सद्वृष्टिर्बलिभुजि तडित्सस्यविलयः ॥
नृणां ताम्रे पिंगे निजदिनगते स्त्रीसुखमत-
श्चतुष्पाद्वृद्धिः स्याद्द्विजनृपलवात्तीर्थसुकृतम् ॥ ५ ॥

प्रश्ने स्वांशः शोभनांशगतः बलिष्ठः पिंगलो यदि चंद्रबुधवारे मित्रांशे तदाऽकालेपि सद्वृष्टिः। पुनः काले सद्वृष्टिरिति किमु वाच्यं॥ बलिभुजि प्रश्ने-काकांशे तडित्सस्यनाशश्च । स्त्रीसुखप्रश्ने विवाहप्रश्ने वा ताम्रचूडे पिंगले वा निजदिनगते सति नृणां स्त्रीसुखमुत्तमं विवाहयोगो वा ॥ अतः आभ्यां पक्षिभ्यां गोमहिष्यादिचतुष्पाद्वृद्धिः । ब्राह्मणक्षत्रियपक्ष्यंशे तीर्थादि-दर्शनं यज्ञयागादिसिद्धिश्च वाच्या ॥ ५ ॥

दोषज्ञानं शालिन्याह—

नरपितृसुरदैवप्रेतदोषाः क्रमात्स्युः ।
शमभुजिनतिजप्याहारजप्याः शुभांशे ॥
सुमनसितचणाख्याः शालिमाषा गुडो गो-
रसघृतासिततैलं श्येनतो वृद्धिमेति ॥६॥

प्रश्ने तात्कालिके श्येने नरकृतमारणादिप्रयोगतः पीडा । पिंगलांशे पितृ-दोषतः पीडा ॥ काकांशे देवकृतपीडा । कुक्कुटांशे प्रारब्धभोगः॥ मयूरां-शे भूतप्रेतादिदोषतः तत्परिहारस्तु नरकृतप्रयोगादौ शमः शांतिः चंडी-पाठाद्यनुष्ठानं । पितृदोषे ब्राह्मणभुजिर्भोजनम् ॥ देवदोषे रुद्राभिषेको देव-पूजादि । दैवदोषे तत्तकर्मविपाकोक्तजपो विष्णुसहस्रनामादिजपो वा ॥ प्रेतदोषे बलिदानं । सति संभवे नारायणबल्यादि । यदुक्तं 'प्रेतदोषे प्रकर्त-व्यो नारायणबलिर्विधिः । प्रेतश्राद्धं त्रिपिंडाख्यं विष्णोस्तर्पणमेव च' इति॥

एवं दोषाः शुभांशे जय्याः। अत्र व्याख्यांतरं भोजनाद्यवस्थासु यथाक्रमं नरपित्रादिदोष इति । धान्यादिवृद्धिप्रश्ने श्येने गोधूमवृद्धिः।। पिंगले शर्करावृद्धिः। काके चणकवृद्धिः। कुक्कुटे शालिवृद्धिः। मयूरे माषवृद्धिः । एषां समर्घता वा वाच्या । श्येने गुडवृद्धिः। पिंगले गोरसवृद्धिः। काके मधुवृद्धिः कुक्कुटे इक्षुरसवृद्धिः मयूरे तैलवृद्धिः ॥ ६ ॥

पुनः शालिन्याह–

**ताम्रं रौप्यं हेममुक्ताय एभ्यस्त्वक्तूलक्षौमप्रसूनोर्णकाश्च ।।**
**निट्शूराद्यौ केकिकाकौ द्युशूरौ रात्र्यंतेन्यः स्वेष्टदौ तौ तदेति ७**

श्येनादिभ्यः ताम्ररौप्यहेममौक्तिकलोहसमर्घता। त्वक्शणादि। तूलं कार्पासं। क्षौमं दुकूलं। प्रसूनं पुष्पकेशरादि । ऊर्णा कंबलादि एषां क्रमाच्छ्येनादिभ्यो वृद्धिः । आद्यौ श्येनपिंगलौ निशाबलिनौ मयूरकाकौ दिनबलिनौ रात्र्यंते उषःकाले अन्यः कुक्कुटो बली तदा ते गमनादौ इष्टफलदा भवंति इतिशब्दः फलाध्यायसमाप्त्यर्थः ।। ७ ।।

इति फलाध्यायश्चतुर्थः ॥

---

# पंचमोऽध्यायः

अथ कालज्ञानाध्यायः ।। वर्षतः कालज्ञानादिपृच्छां विनापि निर्दिशति शार्दूलविक्रीडितेन–

**क्रांतौ स्वांशखगात्सुखार्घमुखमूह्यं मेष आब्दं तनौ भाख्यांशोत्थवितः शुभाशुभफलं चाब्दं च सौराब्दतः ।। स्वावस्थासदृशं फलं बलवशात्सर्वत्र चोह्यं धिया रिष्टारिष्टशुभाशुभं खगवशात्प्राग्वत्सुताद्यं वदेत् ।। १ ।।**

५।४८ अनयोर्मध्ये श्येनो बली तस्य गमनावस्था मित्रांशे वर्तते ॥ अतएव मिष्टान्नभोजनयुता मानपूर्वका पारणेत्युत्तरं देयम् ॥ इति श्रीपंचपाक्षिकग्रंथे वासुदेवानंदसरस्वतीविरचिते स्वकृतटीकाशुबोधिनी समाप्ता ॥ प्रीयादनेन भगवाञ्छ्रीदत्तः ॐ तत्सत् ॥

| श्येनः नैसर्गबलः | पिंगलः |
|---|---|
| ०।३६ | ०।४८ |
| मित्रति ०४० | मित्रति ०४० |
| स्ववार १।० | मि० वा ०४० |
| स्वर्क्ष १।० | मित्रर्क्ष ०४० |
| मि० ल० ४० | मि-ल० ४० |
| | २-४०-२ |
| यो० ३-२० | मि-दि० ४०।३ |
| स्व० दि० १-० | स्व० चे० २०।४ |
| मि० चे० ४० | |
| स्वांग १-० | मि० ४०।५ |
| शत्रुद० २० | मि. द० ४०।६ |

## अथ बालबोधाय उदाहरणम् ।

शके १८०४ मार्गे० शु० १५ रवौ मृगभे मकरलग्ने घ० ६ प० ३० समये पूर्वदिक्स्थः प्रष्टा स्वमूर्धानं स्पृशन् पृच्छति । अद्य दत्तजयंतीपारणा कथं भवतीति । प्रश्नाद्याक्षरमकारः अतः श्येनपक्षी । शुक्ले दिवा रविवारक्रमेण द्वितीयांशे पक्षी पिंगलः अनयोर्बलविचारे क्रियमाणे श्येनस्य बलं ६।३६ पिंगलस्य ५।४८ अनयोर्मध्ये श्येनो बली । तस्य गमनावस्था मित्रांशे वर्तते । अतएव मिष्टान्नभोजनयुता मानपूर्वका पारणा इत्युत्तरं देयम् ।

उपरितनसंकलितबलस्य पृथक्करणम् । श्येनपक्षिणः

१ प्रथमं नैसर्गिकं बलं ०।३६ नवमं श्लोकं अवलोकय।

२ पूर्वाभिमुखो भूत्वा प्रश्नः कृतः अतः स्वकीया श्येनदिक्। तस्माद् द्वितीयं दिग्बलं नवमं श्लोकं अवलोकय।

३–१ प्रश्नतिथिः पौर्णिमा सा मित्रमयूरपक्षितिथिः अतः तिथिबलं ०।४० नवमं श्लोकं अवलोकय।

२ रविवासरे प्रश्नः, सः स्वकीयश्येनपक्षिवारः अतः वारबलं १।० नवमं श्लोकं अवलोकय।

३ प्रश्नर्क्षं मृगशीर्षभं तदपि स्वकीयं नक्षत्रं अतः नक्षत्रबलं १।० नवमं श्लोकं अवलोकय।

४ प्रश्नांगं मकराख्यं तत्तु मित्रमयूरपक्षिणः अतः लग्नबलं ०।४० एवं संकलितं तृतीयं कालबलं ३।२०

४ प्रश्नकाले प्रश्नकर्ता उपविष्टः अतः शत्रुपक्षिकाकचेष्टाबलं ०।२०

५ मूर्ध्नि स्पृशन् सन् प्रश्नः, तत् स्वांगं अस्ति अतः स्थानबलं पंचमं १।० नवमं श्लोकं अवलोकय।

६ श्येनोपरि शत्रुकाकदृष्टिः अतः षष्ठं दृग्बलं एवं संकलितं षड्-बलं ६।३६

## अथ पिंगलपक्षिणः विवरणम्

नैसर्गिकं प्रथमं बलं ०।४०

२ पूर्वाभिमुखः प्रश्नः, सा मित्रश्येनपक्षिदिक् अतो द्वितीयं दिग्बलं ०।४०

३–१ प्रश्नः पौर्णिमायां, सा मित्रमयूरपक्षितिथिः अतः तिथि-बलं ०।४०

२ रविवारे प्रश्नः, सः मित्रश्येनपक्षिवारः अतः वारबलं ०।४०

३ प्रश्नर्क्षं मृगशीर्षं, तत् मित्रश्येनपक्षिनक्षत्रं अतः नक्षत्रबलं ०।४०

४ मकराख्यं प्रश्नांगं, तदपि मित्रमयूरांगं अतः लग्नबलं ०।४० एवं संकलितं कालबलं २।४०

४ प्रष्टा उपविष्टः, अयः शत्रुकाकचेष्टा तद्बलं चतुर्थं चेष्टासंज्ञं ०।२०

५ उत्तमांगं स्पृशन् सन् प्रश्नः, तन्मित्रश्येनांगं अतः पंचमं स्थानबलं ०।४०

६ पिंगलोपरि मित्रकुक्कुटदृष्टिः षष्ठं दृग्बलं ०।४० एवं संकलितं षड्बलं ५।४०

इति श्रीमद्वासुदेवानंदसरस्वतीयतिविरचिते पांचपाक्षिके ग्रंथे स्वकृतटीकाऽऽशुबोधिनी समाप्ता । प्रीयादनेन भगवान् श्रीदत्तः ॥

---

## शुक्ले दिवा कृष्णे रात्रौ

| | अरिपुकेतां | विष्णुस्तेलोकः | उपेंद्रोहरिः | एकोनरिपुः | तोतरिपुके |
|---|---|---|---|---|---|
| | रवि—भौम | बुध—चंद्र | गुरुः | शुक्र | शनिः |
| घ० | श्ये.पिं.का.कु.म. | पिंकाकुमश्ये | काकुमश्येपिं | कुमश्येपिंका | मश्येपिंकाकु |
| ६ | भोगरानिम | भोगरानिम | भोगरानिम | | |
| | पिंकाकुमश्ये | काकुमश्येपिं | कुमश्येपिंका | मश्येपिंकाकु | श्येपिंकाकुम |
| १२ | रानिमभोग | रानिमभोग | रानिमभोग | | |
| | काकुमश्येपिं | कुमश्येपिंका | मश्येपिंकाकु | श्येपिंकाकुम | पिंकाकुमश्ये |
| १८ | मभोगरानि | मभोगरानि | मभोगरानि | | |
| | कुमश्येपिंका | मश्येपिंकाकु | श्येपिंकाकुम | पिंका।कुमश्ये | काकुमश्येपिं |
| २४ | गरानिमभो | गरानिमभो | ,, ,, | | |
| | मश्येपिंकाकु | श्येपिंकाकुम | पिंकाकुमश्ये | काकुमश्यैपिं | कुमश्येपिंका |
| ३० | निमभोगरा | निमभोगरा | | | |
| दिशा. | पू. प. | द. नै. | प. वा. | उ. ई. | मध्य. |
| अवस्था | बाल ५ | पौगं० १५ | तरुण ४० | वार्धक्य ७० | अ. वृ. १०० |
| तिथि | नंदा १।६।११ | भद्रा २।७।१२ | जया ३।८।१३ | रिक्ता ४।९।१४ | पूर्णा५।१०।१५।३० |
| वार | रवि भौम | चंद्र बुध | गुरु. | शुक्र. | शनि. |

## कृष्णे दिवा शुक्ले रात्रौ.

| | | | | | |
|---|---|---|---|---|---|
| | एवं जुहोति | उन्मोदितेन | इत्येवजुहो | अनुमोदिते | अमित्येतनु |
| | रवि. भौम. | बुध. | गुरु. | शुक्र. | चंद्र-शनि. |
| ध० | कुश्ये कामपिं | कामापिंकुश्ये | पिंकुश्येकाम | श्येकामपिंकु | मपिंकुश्येका |
| ६ | म.नि.रा.ग. भो | मनिरागभो | मनिरागभो | मनिरागभो | मनिरागभो |
| | श्येकामपिंकु | मपिंश्येकुका | कुश्येकामपिं | कामपिंकुश्ये | पिंकुश्येकाम |
| १२ | रा.ग.भो.म.नि. | रागभोमानि | रागभोमनि | रागभोमनि | रागभोमनि |
| | कामपिंकुश्ये | पिंकुश्येकाम | श्येकामपिंकु | मपिंकुश्येका | कुश्येकामपिं |
| १८ | भोमनिराग | भोमनिराग | भोमनिराग | भोमनिराग | भोमनिराग |
| | मपिंकुश्येका | कुश्येकामपिं | कामपिंकुश्ये | पिंकुश्येकाम | श्येकामपिंकु |
| २४ | निरागभोम | निरागभोम | निरागभोम | निरागभोम | निरागभोम |
| | पिंकुश्येकाम | श्येकामपिंकु | मपिंकुश्येका | कुश्येकामपिं | कामपिंकुश्ये |
| ३० | गभोमनिरा | गभोमानिरा | गभोमनिरा | गभोमनिरा | गभोमनिरा |

## परिशिष्ट २ श्लोक ९

### ( १ ) शुक्लपक्षांमध्यें दिवसाच्या व कृष्णपक्षांमध्यें रात्रींच्या अवस्था व पक्षी यांचा क्रम

| घ. | अवस्था | र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|---|
| ०–६ | भोजन | श्येन | पिंगल | श्येन | पिंगल | काक | कोंबडा | मोर |
| ६–१२ | गमन | पिंगल | काक | पिंगल | काक | कोंबडा | मोर | श्येन |
| १२–१८ | राज्यं | काक | कुक्कुट | काक | कोंबडा | मोर | श्येन | पिंगल |
| १८–२४ | निद्रा | कुक्कुट | मोर | कोंबडा | मोर | श्येन | पिंगल | काक |
| २४–३० | मरण | मोर | श्येन | मोर | श्येन | पिंगल | काक | कोंबडा |

### ( २ ) कृष्णपक्षांमध्यें दिवसाच्या व शुक्लपक्षांमध्यें रात्रींच्या अवस्था व पक्षी यांचा क्रम

| घ. | अवस्था | र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|---|
| ०–६ | मरण | कुक्कुट | मोर | कोंबडा | काक | पिंगल | श्येन | मोर |
| ६–१२ | निद्रा | मोर | श्येन | मोर | कोंबडा | काक | पिंगल | श्येन |
| १२–१८ | राज्यं | श्येन | पिंगल | श्येन | मोर | कोंबडा | काक | पिंगल |
| १८–२४ | गमन | पिंगल | काक | पिंगल | श्येन | मोर | कोंबडा | काक |
| २४–३० | भोजन | काक | कोंबडा | काक | पिंगल | श्येन | मोर | कोंबडा |

(३) शुक्ल पक्षांमध्यें दिवसांचें व कृष्णपक्षांमध्यें रात्रींचें तत्कालांश-वारांश पक्षी दाखविणारें कोष्टक

| | | | | | | |
|---|---|---|---|---|---|---|
| र. | चं. | मं. | बु. | गु. | शु. | श. |
| श्ये. | पिं. | श्ये. | पिं. | का. | कु. | मो. |

घ. ० ते ६ पर्यंत

| घ. | १·२ | २·४ | ३·६ | ४·८ | ६ |
|---|---|---|---|---|---|
| र. | श्ये. | पिं. | का. | कु. | म. |
| चं. | पिं | का. | कु. | म. | श्ये. |
| मं. | श्ये. | पिं. | का. | कु. | म. |
| बु. | पिं. | का. | कु. | म. | श्ये. |
| गु. | का. | कु. | म. | श्ये. | पिं. |
| शु. | कु. | म. | श्ये. | पिं. | का. |
| श. | म. | श्ये. | पिं. | का. | कु. |

| | | | | | | |
|---|---|---|---|---|---|---|
| र. | चं. | मं. | बु. | गु. | शु. | श. |
| पिं. | का. | पिं. | का. | कु. | मो. | श्ये. |

घ. ६ ते १२ पर्यंत

| घ.७·२ | ८·४ | ८·६ | १०·८ | १२ |
|---|---|---|---|---|
| पिं. | का. | कु. | म. | श्ये. |
| का. | कु. | म. | श्ये. | पिं. |
| पिं. | का. | कु. | म. | श्ये. |
| का. | कु. | म. | श्ये. | पिं. |
| कु.. | म. | श्ये. | पिं. | का. |
| म. | श्ये. | पिं. | का. | कु. |
| श्ये. | पिं. | का. | कु. | श्ये. |

* पळें दशांशांत दिलीं आहेत. एक दशांश = ६ पळें.

(४) शुक्ल पक्षामध्यें दिवसाचें व कृष्ण पक्षामध्यें रात्रीचे तत्कालांश-वारांश-पक्षी दाखविणारें कोष्टक

| र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|
| का. | कु. | का. | कु. | म. | श्ये. | पिं. |

घ. १२ ते १८ पर्यंत.

| र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|
| का. | म. | कु. | म. | श्ये. | पिं | का. |

घ. १८ ते २४ पर्यंत.

| घ. | १३·२ | १४·४ | १५·६ | १६·८ | १८ | घ. १९·२ | २०·४ | २१·५ | २२·८ | २४ |
|---|---|---|---|---|---|---|---|---|---|---|
| र. | का. | कु. | म. | श्ये. | पिं. | का. | म. | श्ये. | पिं. | का. |
| चं. | कु. | म. | श्ये. | पिं. | का. | म. | श्ये. | पिं. | का. | कु. |
| मं. | का. | कु. | म. | श्ये. | पिं. | कु. | म. | श्ये. | पिं. | का. |
| बु. | कु. | म. | श्ये. | पिं. | का. | म. | श्ये. | पिं. | का. | कु. |
| गु. | म. | श्ये. | पिं. | का. | कु. | श्ये. | पिं. | का. | कु. | म. |
| शु. | श्ये. | पिं. | का. | कु. | म. | पिं. | का. | कु. | म. | श्ये. |
| श. | पिं. | का. | कु. | म. | श्ये | का. | कु. | म. | श्ये. | पिं. |

(५) शुक्ल पक्षामध्यें दिवसाचें व कृष्ण पक्षामध्यें रात्रीचें तत्कालांश-वारांश-पक्षी दाखविणारें कोष्टक

| | | | | | | |
|---|---|---|---|---|---|---|
| र. | चं. | मं. | बु. | गु. | शु. | श. |
| म. | श्ये. | म. | श्ये. | पिं. | का. | कु. |

घ. २४ ते ३० पर्यंत

| घ. | २५·२ | २६·४ | २७·६ | २८·८ | ३० |
|---|---|---|---|---|---|
| र. | म. | श्ये. | पिं. | का. | कु. |
| चं. | श्ये. | पिं. | का. | कु. | म. |
| मं. | म. | श्ये. | पिं. | का. | कु. |
| बु. | श्ये. | पिं. | का. | कु. | म. |
| गु. | पिं. | का. | कु. | म. | श्ये. |
| शु. | का. | कु. | म. | श्ये. | पिं. |
| श. | कु. | म. | श्ये. | पिं. | का. |

(६) कृष्ण पक्षामध्यें दिवसाचें शुक्ल पक्षामध्यें रात्रीचें तत्कालांश-वारांश-पक्षी दाखविणारें कोष्टक

| | | | | | | |
|---|---|---|---|---|---|---|
| र. | चं. | मं. | बु. | गु. | शु. | श. |
| कु. | म. | कु. | का. | पिं. | श्ये. | म. |

घ. ० ते ६ पर्यंत.

| घ. | १·२ | २·४ | ३·६ | ४·८ | ६·० |
|---|---|---|---|---|---|
| र. | कु. | म. | श्ये. | पिं. | का. |
| चं. | म. | श्ये. | पिं. | का. | कु. |
| मं. | कु. | म. | श्ये. | पिं. | का. |
| बु. | का. | कु. | म. | श्ये. | पिं. |
| गु. | पिं. | का. | कु. | म. | श्ये. |
| शु. | श्ये. | पिं. | का. | कु. | म. |
| श. | म. | श्ये. | पिं. | का. | कु. |

## (७) कृष्ण पक्षांमध्यें दिवसाचें व शुक्ल पक्षांमध्यें रात्रीचें तत्कालांश-वारांश-पक्षी दाखविणारें कोष्टक

| र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|
| म. | श्ये. | म. | कु. | का. | पिं. | श्ये. |

घ. ६ ते १२ पर्यंत

| घ. | ७·२ | ८·४ | ९·६ | १०·८ | १२ |
|---|---|---|---|---|---|
| र. | म. | श्ये. | पिं. | का. | कु. |
| चं. | श्ये. | पिं. | का. | कु. | पिं. |
| मं. | म. | श्ये. | पिं. | का. | कु. |
| बु. | कु. | म. | श्ये. | पिं. | का. |
| गु. | का. | कु. | म. | श्ये. | पिं. |
| शु. | पिं. | का. | कु. | म. | श्ये. |
| श. | श्ये. | पिं. | का. | कु. | म. |

| र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|
| श्ये. | पिं. | श्ये. | म. | कु. | का. | पिं. |

घ. १२ ते १८ पर्यंत

| घ. | १३·२ | १४·४ | १५·५ | १६·८ | १८·० |
|---|---|---|---|---|---|
| र. | श्ये. | पिं. | का. | कु. | म. |
| चं. | पिं. | का. | कु. | म. | श्ये. |
| मं. | श्ये. | पिं. | का. | कु. | म. |
| बु. | म. | श्ये. | पिं. | का. | कु. |
| गु. | कु. | म. | श्य. | पिं. | का. |
| शु. | का. | कु. | म. | श्ये. | पिं. |
| श. | पिं. | का. | कु. | म. | श्ये. |

(८) कृष्णपक्षांमध्यें दिवसाचें व शुक्लपक्षांमध्यें रात्रीचें तत्कालांश-वारांश-पक्षी दाखविणारें कोष्टक

| र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|
| पिं. | का. | पिं. | श्ये. | म. | कु. | का. |

घ. १८ ते २४ पर्यंत

| घ. | १९·१२ | २०·४ | २१·६ | २२·८ | २४ |
|---|---|---|---|---|---|
| र. | पिं. | का. | कु. | म. | श्ये. |
| चं. | का. | कु. | म. | श्ये. | पिं. |
| मं. | पिं. | का. | कु. | म. | श्ये. |
| बु. | श्ये. | पिं. | का. | कु. | म. |
| गु. | म. | श्ये. | पिं. | का. | कु. |
| शु. | कु. | म. | श्ये. | पिं. | का. |
| श. | का. | कु. | म. | श्ये. | पिं. |

| र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|
| का. | कु. | का. | पिं. | श्ये. | म. | कु. |

घ. २४ ते ३० पर्यंत

| घ. | २५·२ | २६·४ | २७·६ | २८·८ | ३० |
|---|---|---|---|---|---|
| र. | का. | कु. | म. | श्ये. | पिं. |
| चं. | कु. | म. | श्ये. | पिं. | का. |
| मं. | का. | कु. | म. | श्ये. | पिं. |
| बु. | पिं. | का. | कु. | म. | श्ये. |
| गु. | श्ये. | पिं. | का. | कु. | म. |
| शु. | म. | श्ये. | पिं. | का. | कु. |
| श. | कु. | म. | श्ये. | पिं. | का. |

शुक्लपक्षांत दिवसाच्या व कृष्णपक्षांत रात्रीच्या अवस्था

| | | |
|---|---|---|
| घ. | ०–६ पर्यंत | भोजन—श्ये. |
| ,, | ६–१२ पर्यंत | यात्रा—पिं. |
| ,, | १२ ते १८ | राज्यं—का. |
| ,, | १८ ते २४ | शयनं—कौं. |
| ,, | २४ ते ३० | मरण—म. |

कृष्णपक्षांत दिवसाच्या व शुक्लपक्षांत रात्रीच्या अवस्था

| | | |
|---|---|---|
| घ. | ० ते ६ | मरण — म. |
| ,, | ६ ते १२ | शयनं — कौं. |
| ,, | १२ ते १८ | राज्यं — का. |
| ,, | १८ ते २४ | यात्रा — पिं. |
| ,, | २४ ते ३० | भोजनं — श्ये. |

## षड्बल काढण्यास उपयोगी कोष्टक

( श्री. सखाराम बापू गेंडे, नरसोबावाडी यांजकडून )

| बल | श्येन | पिंगल | काक | कुक्कुट | मयूर | |
|---|---|---|---|---|---|---|
| नैसर्गिक | ०।३६ | ०।४८ | १।० | ०।२४ | ०।१२ | |
| (१) बल | | | | | | |
| दिक्बलं | पूर्व | दक्षिण | पश्चिम | उत्तर | मध्य | |
| (२) | आग्नेय | नैर्ऋत्य | वायव्य | ईशान्य | | |
| कालबलं | नंदा | भद्रा | जया | रिक्ता | पूर्णा | |
| (३) तिथि. | १।६।११ | २।७।१२ | ३।८।१३ | ४।९।१४ | ५।१०।१५ | |
| वार | रविवार | सोम. | गुरुवार | शुक्र. | शनि. | |
| | मंगळवार | बुध. | | | | |
| नक्षत्र | १।२।३ | ७।८।९ | १३।१४ | १८।१९ | २३।२४ | |
| | ४।५।६ | १०।११ | १५।१६ | २०।२१ | २५।२६ | |
| | | १२ | १७ | २२ | २७ | |
| लग्न | मेष, सिंह, | मिथुन, | मीन | वृषभ | मकर | |
| | वृश्चिक | कर्क, कन्या | धनु | तूळ | कुंभ | |
| चेष्टा | भोजन | गमन | राज्य | निद्रा | मरण | |
| (४) बलं | | | | | | |
| स्थान | शिरोभाग | मुख. | हृदय | पृष्ठभाग | नाभीच्या | |
| (५) बलं | | | | | खालचाभाग | |
| दृष्टि | काकाची | कुक्कुटाची | मयुराची | श्येनाची | पिंगलाची | |
| (६) बलं | ०।२० | ०।४० | ०।४० | ०।४० | ०।४० | |
| अक्षरें | अ क छ ड | ख ज ढ न | उ ऊ ग झ | ए ऐ घ ट | ओ औ च ठ | |
| | ध भ व | म श इ ई | त प य ष | य फ र स | द ब ल ह | |
| शत्रु | काक | काक | कुक्कुट | काक | श्येन | शत्रुबल |
| | कुक्कुट | | पिंगल, श्येन | श्येन | काक | ०।२० |
| मित्र | मयूर | श्येन, मयूर, | मयूर | मयूर | कुक्कुट | मित्रबल |
| | पिंगल | कुक्कुट | | पिंगल | पिंगल | ०।४० |
| | | | | | | स्वबल ०।६० |

| | श्येन ६ | पिंगला ६ | काक ५ | कुक्कुट ५ | मयूर ५ |
|---|---|---|---|---|---|
| | १ २ ३ | ७ ८ ९ | १३ १४ | १८ १९ | २३ २४ |
| नक्षत्रा० | ४ ५ ६ | १० ११ | १५ १६ | २० २१ | २५ २६ |
| | | १२ | १७ | २२ | २७ |
| तत्त्व | पृथ्वी | आप | तेज | वायू | आकाश |
| तिथि | नंदा | भद्रा | जया | रिक्ता | पूर्णा |
| लग्न | मे. वृ. सिं. | मि. क. कुं. | ध. मी. | वृ. तु. | म. कुं. |
| वायु | प्राण | अपान | व्यान | उदान | समान |
| मंत्र | सद्योजा० | वामदेव० | अघोर० | तत्पुरुष० | ईशान० |
| लिंगम् | पुं. | स्त्री० | पुं० | स्त्री० | नपुंस. |
| वर्ण | ब्राह्मण | क्षत्रिय | वैश्य | शूद्र | संकर |
| कांति | पीत | श्वेत | रक्त | कृष्ण | चित्र |
| चिंता | मूल | जीव | धातु | मू० जी० | धातु |
| जाति | चतुष्पाद | द्विपाद | गवादि | पक्षी | द्विपाद |
| काल | भविष्य | भूत | भविष्य | वर्तमान | भूत |
| अवयव | शिर | मुख | हृदय | पृष्ठ | नाभेरधः |
| अंग | दक्षिण | वाम | दक्षिण | वाम | वाम |
| देश | क्रोश | समीप | यो. अर्ध | क्रो०र्ध | योजन |
| स्वप्न | दुष्ट | शुभ | मध्य | लाभ | सुखद |
| चारः | ३ | ७ | ५ | ११ | ४ |
| वास | वन | जन | ग्राम | गृह | वन |
| वय | बाला | पौगंड | तरुणी | वृद्धा | अतिवृद्धा |
| अवस्था | अल्पप्रजा | प्रजा | वंध्या | ब० प्र० | ब० प्र० |
| धान्य | गोधूम | तंदुल | चणक | शालि | माष. |
| रस | गुड | गोरस | मधु | शर्करा | तैल |
| धातु | ताम्र | रौप्य | हेम | रत्न | लोह |
| वस्त्र | त्वक् | तूल | क्षौम | चित्र | ऊर्णा |
| काल | निशांत | निशा | दिन | उषःकाल | दिन |

| | | | | | |
|---|---|---|---|---|---|
| मित्र | मयूर पिंग. | श्ये.म.कु. | मयूर | मयूर पिं. | कु. पि |
| शत्रु | काक कु. | काक | कु.पिं.श्ये. | का. श्ये | श्ये. व |
| बल | ०।३६ | ०।४८ | १।० | ०।२४ | ०।१२ |
| स्थिति | भोजन | गमन | राज्यं | निद्रा | मरण |

## भोजनादिफलकोष्टकं

| | भोजन | गमन | राज्य | निद्रा | मरण |
|---|---|---|---|---|---|
| काल | मास | पक्ष | दिन | अयन | वर्ष |
| भोजन | मिष्टान्न | शुष्क | पक्वान्न | जाड्य | पर्युषित |
| अर्घ | सुभिक्ष | न्यून | स्थैर्य | महार्घ | दुर्भिक्ष |
| लाभ | अधि | सम | मध्यम | न्यून | हानि |
| घात | शिर | पृष्ठ | कुक्षि | अधः | अंतः |
| स्थल | चोर-गृह | दुर्ज. गृह | स्वगृह | परगृह | बहिः |
| आस. | राग. मु. | साम्य | आरोग्य | दीर्घरो. | मरण |
| निधि | सिद्धि | यत्नमि | सुसि. | विकल्प | असाध्य |
| प्राप्ति | आगंतु | प्राप्रा | स्वल्प | कष्टप्रा. | अप्राप्ति |
| आगम. | विलंब. | शीघ्र. | स्वागम | पुनरा. | विघ्न |
| सुख | विषय | कष्ठ | क्रीडा | वैरस्य | क्लेश |
| जय | जय | कष्टमय | विजय | पराजय | दुःख |
| स्थितिः | आस. | गमन | उत्थान | शयन | निद्रा. |
| पीडा | प्रयोग | पितृपी. | देवपी. | दैवपी. | प्रेतपीडा |
| परिहार | शांति | ब्रा. भो. | देवपूजा | जप | बलिदान नारायण सर्पबली |
| अधिप | श्येन | पिंगल | काक | कुक्कुट | मयूर |
| स्वर | अ आ | इ ई | उ ऊ | ए ऐ | ओ औ |
| वर्ण | कछड | खजढ | गझत | घटथ | चठद |
| | घभव | नमश | पयष | परख | बलह+ |

श्रीगणेशाय नमः ।। श्रीमद्दत्तात्रेयाय नमः ।।

श्री. प. प. वासुदेवानंदसरस्वतीयतिकृत

# ।। पंचपाक्षिकभाषांतरप्रारंभः ।।

या स्कंधत्रयात्मक ज्योतिःशास्त्राचा विचार करण्यास असमर्थ असलेल्या मंदबुद्धीच्या लोकांना त्याचें सुखानें ज्ञान व्हावें म्हणून स्कंदांनीं सांगितलेल्या पांचपाक्षिक प्रश्नविद्येचें सारसंग्रह करून संक्षेपतः विवरण करितातः—

दत्तः स्वात्माऽपि येनेह स्वभक्तायात्रये स वः ।।
दत्तात्रेयोऽखिलापद्भ्यः सदाऽव्याद्भगवान्प्रभुः ।। १ ।।

अन्वयः—येन स्वभक्ताय अत्रये स्वात्मापि दत्तः सः भगवान् प्रभुः दत्तात्रेयः अखिलापद्भ्यः वः सदा अव्यात् ।। १ ।।

अर्थः—अत्रि ऋषि नांवाच्या आपल्या भक्ताला स्वकीय आत्माहि ज्यांनीं दिला ते प्रभु भगवान् दत्तात्रेय सर्व प्रकारच्या आपत्तींपासून निरंतर तुमचें संरक्षण करोत. ।। १ ।।

पञ्चात्माऽत्रिसुतेरितेन सदसद्ज्ञानाप्तये कथ्यते ।
पञ्चाभीष्टखगस्थितिः फलयुता ज्योतिर्विदानन्ददा ।
येनातप्तमहाभरोऽक्षमजरं सद्द्वादशारं धृतं ।
चक्रं सद्दृढनाभिकं स भगवान् प्रीयात्तया स्वेष्टदः ।। २ ।।

अन्वयः—पंचात्मात्रिसुतेरितेन सदसद्ज्ञानाप्तये ज्योतिर्विदानन्ददा फलयुता पंचाभीष्टखगस्थितिः कथ्यते । येन अतप्तमहाभरोक्षं अजरं सद्दृढनाभिकं सद्द्वादशारं चक्रं धृतं सः स्वेष्टदः भगवान् तया प्रीयात् ।। २ ।।

अर्थः—पंचात्मा आत्रिपुत्र जे दत्तात्रय त्यांच्या प्रेरणेनें पांच अभीष्ट पक्ष्यांची स्थिति शुभाशुभ ज्ञानप्राप्तीकरितां आणि ज्योतिषशास्त्रवेत्त्यांच्या मनाला आनंद देणारी अशी फलासह मी सांगतों. ज्यानें उष्ण नसलेले, अतिशय वजनदार, जीर्ण न होणारें, द्वादशमासरूपी बारा आरांचें, अति-

शय षट्ट नाभीनें युक्त असें चक्र धारण केलें आहे, व जो आपल्या भक्तांना इष्ट फल देतो तो दत्तप्रभु या ग्रंथाच्या कथनानें संतुष्ट होवो.

पंचात्मा या शब्दाचा अर्थ स्वामींनीं नाना प्रकारांनीं करून दाखविला आहे. ( १ ) पंच म्हणजे विस्तीर्ण अथवा व्यापक आहे, आत्मा म्हणजे स्वरूप ज्याचें तो हा एक अर्थ, ( २ ) अथवा ब्रह्माच्या उपलब्धीची जी पांच स्थानें आहेत त्यांचा आत्मा म्हणजे प्रेरक. हीं पांच स्थानें गीतेंत सांगितलेलीं आहेत—" अधिष्ठानं तथा कर्ता करणं च पृथग्विधं। विविधाश्च पृथक्चेष्टा दैवं चैवात्र पंचमम् " (१८अ.) अथवा (३) पृथ्वी आदि पंचभूतांचा आत्मा म्हणजे अंतर्यामी " यः पृथिव्यां तिष्ठन् " इत्यादि श्रुतिवचन आहे. ( ४ ) अथवा पंचप्राण हें ज्याचें आत्मा म्हणजे उपलब्धिद्वार आहे असा. कारण भगवान् शंकराचार्यांनीं म्हटलें आहे: " प्राणायामव्रतम् तत् श्रुतिशिरसी मतम् स्वात्मलब्ध्यै न चान्यत् " इति (५) अथवा चक्षु इत्यादि पांच इन्द्रियांचा आत्मा. याविषयीं श्रुति आहे ती अशी: " श्रोत्रस्य श्रोत्रम् " इति. ( ६ ) पंचायतनांतील पंचदेवतारूप याविषयीं स्मृति आहे ती ही: " एकोऽहं पंचधा जातः " इति ( ७ ) अथवा अत्ति म्हणजे खातो तो आत्मा; प्रलयकाळीं पंचमहाभूतांना जो खाऊन टाकतो तो. ( ८ ) अथवा आप्नोति म्हणजे मिळवून देतो तो आत्मा; पांच अधिकरणांनीं आपल्या भक्तांना प्राप्ति करवून देतो तो. ( ९ ) अथवा पांच प्राणांनीं जगत् चालवितो तो. ( १० ) अथवा पंच विषयांना " अत्ति " म्हणजे खातो तो. आत्मा या शब्दाच्या ज्या व्युत्पत्ति आतांपर्यंत लिहिल्या आहेत, त्या एके ठिकाणीं दिल्या आहेत. तो श्लोक येणेंप्रमाणें: "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।। यच्चास्य सन्ततो भावस्तेनाऽत्मेति च गीयते " इति. अशा प्रकारें आत्मशब्दाची व्युत्पत्ति सांगितली आहे. (११) अथवा प्रस्तुत ग्रंथ ज्योतिषशास्त्र विषयाचा आहे. या शास्त्रामध्यें पंचसंवत्सरमय युग प्रसिद्ध आहे. म्हणून तदनुरोधानें पंचसंवत्सरमय ज्याचा आत्मा आहे तो पंचात्मा असाहि विग्रह करतां येतो. अशा प्रकारें पंचात्मा वगैरे शब्दांचे पुष्कळ वेगवेगळे अर्थ होऊं शकतात. तथापि विस्तार फार होईल या भीतीनें त्यांचें विवेचन येथें केलें नाहीं.

ज्योतिषशास्त्र विद्यमान आहेच. तरी पण त्यांत सुलभता आणण्या-करितां वेदबाह्य असें प्रस्तुत प्रकरण आदरणीय कसें ? अशी शंका केल्यास तिचें निराकरण सांगतात.

येथें खग शब्दानें ग्रह समजावे. त्यामध्यें सूर्य आणि मंगळ हे दोन ग्रह सारखेच क्रूर आणि एकाच वर्णाचे असल्यामुळें एकरूप समजावेत. चंद्र आणि बुध हे पितापुत्र असून सारखेंच शुभ आहेत म्हणून एकरूप सम-जावेत. याप्रमाणें सातहि ग्रह परोक्षतेनें पांच पक्ष्यांच्या रूपानें सांगितलेले आहेत. कारण श्रुति म्हणते "परोक्षप्रिया इव हि देवाः" (देव हे परोक्ष-प्रिय आहेत.) हें मनांत आणून प्रार्थनेच्या मिषानें वैदिक चक्राचा निर्देश केला आहे, तो येणेंप्रमाणें:—ज्या भगवंतानें उष्ण नाहीं आणि वजनदार आहे अक्ष ज्याचा असें बारा मासरूप अर असलेलें आणि ज्या-मध्यें पश्चिमेकडे ग्रहांची गति आहे असें चक्र विश्व चालविण्याकरितां धारण केलें आहे. याला श्रुतीचें प्रमाण असें:—"पंचारे चक्रे परिवर्तमाने तस्मिन्नार्पिता भुवनानि विश्वा। तस्य नाक्षस्तप्यते भूरि भारः सनादेव न शीर्यते सनाभिः। द्वादशारं नहि तज्जरायेत्यादि ॥ अथवा शरीरा-काशामध्यें पंचप्राण हेच पांच पक्षी अशीहि व्याख्या करावी. याला श्रुतीचें प्रमाणः—" उत्पत्तिमायतिं स्थानं विभुत्वं चैव पंचधा ॥ अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुत इति ॥ 'ईश्वरः सर्वभूतानां' या स्मृतीच्या आधारें हृदयरूपी चक्रानें व्याख्यान करावें. अभीष्ट असलेल्या त्या खगस्थितीच्या योगानें भगवान् प्रसन्न होवो. "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ॥ ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा" ही भगशब्दाची व्याख्या दिली आहे. अशा प्रकारचा भगवान् या खगस्थितीनें कसा संतुष्ट होईल, या शंकेचें उत्तर असें:—" यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्" इत्यादि वचनांच्या आधारें म्हणतां येतें कीं कोणतेंही कर्म भगवंताच्या प्रीत्यर्थ त्याला समर्पण केलें तर तो खात्रीनें संतुष्ट होतो. याला स्मृतीचा आधार " पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥" येणेंकरून कवीची निरहंकारवृत्ति आणि लोकांवर उपकार करण्याकरितां

द्वैत प्रवृत्ति असली तरी तिच्यांतील पारमार्थिक दृष्टि, या दोन गोष्टींचें सूचन केलें आहे.

स्वतः उत्पादन केलेल्या सर्वांना इष्ट देतो तो स्वेष्टद. येथें शंका करितात–" आयुरन्नं प्रयच्छसि " अशी स्मृति आहे. तिच्या आधारें म्हणतां येतें कीं ईश्वर अन्न आणि वस्त्र देतो. तो स्वेष्ट देतो असें कसें म्हणावें ? याचें उत्तर असें. असा अर्थ केल्यास जगांत कोणीहि दुःखी असतां कामा नये आणि तसें तर दिसून येत नाहीं. म्हणून असा अर्थ न करतां वेगळा अर्थ केला पाहिजे तो येणेंप्रमाणें:–' स्वानां ' म्हणजे आपल्या भक्तांना इष्ट देतो तो स्वेष्टद असा अर्थ करावा. असें कोणी म्हणेल तर तेंही बरोबर नाहीं. कारण ते भक्त असले तरीही पैशामुळें वगैरे प्रमाद करतील असें संभवनीय आहे. म्हणून ' स्वेष्टद ' हा समास अन्य तऱ्हेनें सोडविला पाहिजे. " स्वेषां इष्टं पुत्रादि संबंध द्यति इति " म्हणजे आपल्याला इष्ट असे पुत्रादिकांचे संबंध जो नष्ट करतो तो. याबद्दल गरुड पुराणांत हें वचन आहे. " यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान्। तावन्तोऽस्य निखन्यन्ते हृदये शोकशंकवः" तसेंच भागवतांतही म्हटलें आहे." यस्यानुग्रहमिच्छामि तस्य सर्वं हराम्यहम् "। अथवा " स्वेभ्यः " म्हणजे मी तुमचाच आहें अशा बुद्धीनें शरण आलेल्या मुमुक्षूंना इष्ट म्हणजे मोक्ष देतो तो स्वेष्टद, अथवा " ज्ञानी त्वात्मैव मे मतम् " या वचनाप्रमाणें मुक्त असतात ते ईश्वररूप असतात. त्यांना इष्ट म्हणजे विदेहमुक्तिरूपी सुख देतो तो स्वेष्टद. याप्रमाणें योग्य तो अर्थ समजावा. विस्ताराच्या भीतीनें येथेंच पुरें करतों.

आता श्येन वगैरे पक्षांचे स्वर वर्ण इत्यादि मालिनी वृत्तांत सांगतात:

अकछडधभवाः श्येनस्य वेः पिंगलस्ये– ।
खजढनमश काके ऊ गझौ तोयैपौ षः ॥
घटथफरसए स्युः कुक्कुटे ओ मयूरे ।
चठदबलहवर्णाः प्रष्टपूर्वाक्षरोत्थाः ॥ २ ॥

अन्वयः—श्येनस्य वेः अकछडधभवाः, पिंगलस्य वेः इखजढनमशाः;

काके ऊ गझौ तः यपो षः; कुक्कुटे घटथफरसः एः, मयूरे ओ चठदबल-
हवर्णाः प्रष्टृपूर्वाक्षरोत्थाः स्युः ॥ ३ ॥

टीकाः—श्येनस्य वेः पक्षिणः अकारः स्वरः कछडधभवाः वर्णाः १ पिंगलस्य इकारः स्वरः खजढनमशाः वर्णा. २ काकस्य उकारः स्वरः गझतयपषा वर्णाः ३ कुक्कुटस्य ए स्वरः घट्टथफरसा वर्णाः, ४ मयूरस्य ओकारः स्वरः चठदबलह वर्णाः, ५ अत्र ऱ्हस्वदीर्घस्वरयोरैक्यम् ॥ एवं प्रष्टुः प्रथमाक्षरस्य यः स्वरो वर्णो वा स पक्षी प्रश्नकाले ज्ञातव्यः ॥ ३ ॥

अर्थः—१ श्येन पक्ष्याचे अ आ हे स्वर आहेत. क, छ, ड, ध, भ, आणि व हे त्याचे वर्ण आहेत.

२ पिंगल पक्ष्याचे इ, ई हे स्वर असून ख, ज, ढ, न, म आणि श हे वर्ण आहेत.

३ काकपक्ष्याचे उ, ऊ हे स्वर असून ग, झ, त, य, प आणि ष हे वर्ण आहेत.

४ कुक्कुट पक्ष्याचे ए ऐ हे स्वर असून घ, ट, थ, फ, र आणि स हे वर्ण आहेत.

५ मयूर पक्ष्याचे ओ औ हे स्वर असून च, ठ, द, ब, ल आणि ह हे वर्ण आहेत.

प्रश्न करणाऱ्याच्या पहिल्या अक्षरावरून प्रश्नपक्षी कोण हें वरील-प्रमाणें समजावें.

| | स्वर | वर्ण |
|---|---|---|
| श्येन | अ आ | क छ ड ध भ व |
| पिंगल | इ ई | ख ज ढ न म श |
| काक | उ ऊ | ग झ त य प ष |
| कुक्कुट | ए ऐ | घ ट थ फ़ र स |
| मयूर | ओ औ | च ठ द ब ल ह |

श्येनादि पक्ष्यांचीं तत्त्वें इत्यादि इंद्रवंशा वृत्तांत सांगतात.—

भूः प्राक् शिशुः कुक्कुट काकवैरिकः ।
पीतोऽश्विषड्भो नृशिफो चतुष्पदी ॥
नंदाजसिंहालिभविष्य कार्युक् ।
प्राणाः कदक्षी द्विज आद्य आद्ययुक् ॥ ४ ॥

अन्वयः—श्लोकाप्रमाणें ॥ ४ ॥

अर्थः—श्येन पक्ष्याचें भूमि हें तत्त्व, पूर्व व आग्नेयी ह्या दिशा, बाल्य (५ वर्षांची) ही अवस्था, पिंगल पक्षी व मयूरपक्षी हे मित्र, काक पक्षी व कुक्कुट पक्षी हे शत्रु. पिंवळा हा रंग; अश्विनी, भरणी, कृत्तिका, रोहिणी, मृगशीर्ष व आर्द्रा हीं नक्षत्रें; हा पुल्लिंगी पक्षी, मूलवस्तु चिंता; चतुष्पाद जाति; प्रतिपदा, षष्ठी व एकादशी ह्या तिथि; मेष, सिंह व वृश्चिक ह्या राशी; भविष्य दाखविणें हा काल; सूर्य व मंगळ हे वार; प्राण हा वायु; शिरोभाग हा अवयव; दक्षिण बाजू हें अंग; ब्राह्मण हा वर्ण; सद्योजातं प्रपद्ये. हा मंत्र इत्यादींनें विशिष्ट असा हा पहिला श्येन पक्षी आहे.

आतां पिंगल पक्षाचे स्वर वर्ण इत्यादि वसंतवृत्तानें सांगतात.—

वार्दक्षिणा नृपकुमारक काकवैरि- ।
रादित्यषड्भ शुचिजीववधूर्द्विपाद्री ॥
भेंद्रंदुविन्मिथुनकर्कवधूभभूता- ।
पानास्यवामकर वामयुतश्च पिंगः ॥ ५ ॥

अर्थः—२ पिंगल पक्ष्याचें पाणी हें तत्त्व; दक्षिण व नैर्ऋत्य ह्या दिशा; क्षत्रिय हा वर्ण; कुमार हीं (५-१५ वर्षे) अवस्था; श्येनपक्षी, कुक्कुट पक्षी व मयूरपक्षी हे मित्र; काकपक्षी हा शत्रु; पुनर्वसु, पुष्य, आश्लेषा, मघा, पूर्वा व उत्तरा हीं नक्षत्रें; शुभ्र हा रंग; जीव ही चिंता; स्त्री हें लिंग; द्विपाद ही जाति; द्वितीया सप्तमी व द्वादशी या तिथी; चंद्र व बुध हे वार; मिथुन, कर्क व कन्या हीं लग्नें; भूत (मागील स्थिति दाखविणें) हा काल; मुख हा अवयव; डावी बाजू हें अंग; वामदेवाय नमो ! अपान हाही मंत्र वायु असे पिंगलपक्ष्याचे गुण सांगितले आहेत.

काकस्य शार्दूलविक्रीडितेनाह–

काकपक्ष्याचे गुण शार्दूलविक्रीडित वृत्तानें सांगतात.

प्रत्यग्विड्युववन्हिधातुकरपंचर्क्षी जया शृंगिपुं–
रक्तेज्यांत्यधनुर्भदक्षहृदयव्यानान्वितः केकियुक् ॥
कालाघोरयुतो बली न च शिखी स्युः पादवृद्ध्याक्रमा–
त्ताम्रश्येनकपिंगला बलिफलं स्यात्प्रष्टृकालोत्थयोः ॥ ६ ॥

अन्वयः—प्रत्यक् विट्, युववन्हिधातुकरपंचर्क्षी, जया, शृंगिपुंरक्ते-ज्यांत्यधनुर्भदक्षहृदयव्यानान्वितः, केकियुक्, कालः, अघोरयुतः, बली, नच शिखी, क्रमात् पादवृध्या ताम्रश्येनपिंगलाः (बलिनां) स्युः प्रष्टृ-कालोत्थयोः फलम् बलि.

अर्थः—३ काकपक्ष्याची पश्चिम व वायव्य ही दिशा, वैश्यवर्ण तारुण्य (१६–४० वर्षे) ही अवस्था; अग्नि हें तत्त्व; धातु ही चिंता; हस्त, चित्रा, स्वाति, विशाखा व अनुराधा हीं नक्षत्रें, तृतीया, अष्टमी व त्रयोदशी ह्या तिथि; शृंगवान् ही जाति, पुरुष हें लिंग, लाल हा रंग; गुरुवार हा वार; धन व मीन हीं लग्नें; दक्षिण बाजू हें अंग; हृदय हा अवयव; व्यान हा वायु; मयूरपक्षी हा मित्र; भविष्य हा काल; अघो-रेभ्यो हा मंत्र; अशा प्रकारचा हा काकपक्षी बलवान् असतो. मयूरपक्षी हा कमी बलवान्; श्येन, पिंगल व कुक्कुट हे पक्षी पाव पाव पटीनें क्रमानें अधिक बलवान.

प्रश्न विचारणारा आणि प्रश्न विचारलेला काळ, याच्या पक्ष्यांमध्यें जो अधिक बलवान् असेल त्याच्या अवस्थेप्रमाणें फल सांगावें. ॥ ६ ॥

टीप—मयूरपक्षी बलवान् नाहीं.

कुक्कुटस्य शार्दूलविक्रीडितेनाह–

कुक्कुट पक्ष्याचे गुण शार्दूलविक्रिडितानें सांगतात.

वातोदक्स्थविरासितांघ्रिजसुरेट् पंचर्क्षकाकारियुक् ॥
पक्षीजीवशिफान्वितश्च मिथुनीरिक्तान्वितः शुक्रयुक् ॥

